# आनन्दाश्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| ग्रन्थनाम । | | मूल्यम् । | |
|---|---|---|---|
| | | रू० | आ० |
| १ | गणेशाथर्वशीर्षम्—सभाष्यम् । ... | ० | ६ |
| २ | रुद्राध्यायः-सायणाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः। | १ | ६ |
| ३ | पुरुषसू ... ... | ० | ४ |
| ४ | योगरत पुरातनः । ... | ५ | ० |
| ५ | ईशाव पेता । ... | ० | १४ |
| ६ | केनो । ... | १ | ० |
| ७ | काठक प्र्योपेता । ... | १ | ४ |
| ८ | प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ० |
| ९ | मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | ० | १० |
| १० | माण्डूक्योपनिषत्-सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता। | २ | ५ |
| ११ | ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ४ |
| १२ | तैत्तिरीयोपनिषत्—सटीकशांकरभाष्याद्युपेता। ... ... | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्तिकम्—सुरेश्वराचार्यकृतं सटीकम् | २ | २ |
| १४ | छान्दोग्योपनिषत्—सटीकशांकरभाष्योपेता । ... ... | ५ | ० |
| १५ | बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । ... | ८ | ० |
| १६ | बृहदारण्यकोपनिषद्भाष्यवार्तिकम्—भागत्रयात्मकम् । | २२ | ८ |
| १७ | श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । ... ... | २ | ४ |
| १८ | सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ | रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः। वैद्यकग्रन्थः । | ३ | १२ |
| २० | जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ | ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ | श्रीमच्छंकरदिग्विजयः—विद्यारण्यकृतः। टीकाटिप्पणीभ्यांसहितः। | ६ | ० |
| २३ | वैयासकन्यायमालाविस्तरः—भारतीतीर्थमुनिप्रणीतः । | १ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः । ... | ८ | ० |
| २५ | सूतसंहिता—माधवकृतटीकोपेता । भागत्रयात्मिका । ... | ११ | ८ |
| २६ | हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ | वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ | ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |

| | ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|---|
| | | रू० | आ० |
| २९ | उपनिषदां समुच्चयः-श्रीनारायणशंकरानन्दकृतदीपिकासहितः | ६ | १२ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । ... | १ | १२ |
| ३१ | बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | १ | १२ |
| ३२ | ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् । | १० | १० |
| ३३ | धन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः । वैद्यकग्रन्थः । | ६ | ४ |
| ३४ | श्रीमद्भगवद्गीता—शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ | श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । ... ... | [illegible] | [illegible] |
| ३५ | संगीतरत्नाकरः—शार्ङ्गदेवकृतः सटीको द्विभागः । गानशास्त्रम् । | १० | ४ |
| ३६ | तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ | तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् । | १४ | ८ |
| ३८ | ऐतरेयारण्यकम्—सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ | संस्काररत्नमाला-गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० | संध्याभाष्यसमुच्चयः—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ | अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ५ | ४ |
| ४२ | तैत्तिरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ | वैयाकरणसिद्धान्तकारिकाः—भट्टोजीदीक्षितकृताः सटीकाः । | ० | १२ |
| ४४ | श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । ... ... | १ | ८ |
| ४५ | श्रीमद्भगवद्गीता—मधुसूदनश्रीधरकृतटीकोपेता । ... | ५ | ४ |
| ४६ | याज्ञवल्क्यस्मृतिः-अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १३ | ० |
| ४७ | पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ | स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ | वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० | यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ | सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः । ... ... | २ | ० |
| ५२ | श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ | सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ | मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ | पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ | नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । | ३ | ८ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ५७ **आचारभूषणम्**—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ **आचारेन्दुः**—माटेइत्युपाह्वत्र्यम्बकविरचितः । | ४ | ० |
| ५९ **श्राद्धमञ्जरी**—केळकरोपाह्वबापूभट्टविरचिता । | २ | ० |
| ६० **यतिधर्मसंग्रहः**—विश्वेश्वरसरस्वतीकृतः । | १ | १२ |
| ६१ **गौतमप्रणीतधर्मसूत्रम्**—हरदत्तकृतटीकासमेतम् । | २ | ८ |
| ६२ **ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः**-सटीकाः | २ | ८ |
| ६३ **छान्दोग्योपनिषत्**—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ **बृहदारण्यकोपनिषत्**—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ **शाङ्खायनब्राह्मणम्**—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । | १ | ४ |
| ६६ **काव्यप्रकाशः**—उद्द्योतयुतप्रदीपसहितः । | ६ | ४ |
| ६७ **ब्रह्मसूत्राणि**—दीपिकासमेतानि । | ४ | ८ |
| ६८ **बृहद्ब्रह्मसंहिता**—नारदपञ्चरात्रान्तर्गता । | १ | १२ |
| ६९ **ज्ञानार्णवतन्त्रम्**—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । | १ | ४ |
| ७० **स्मृत्यर्थसारः**—श्रीधराचार्यविरचितः । | १ | १० |
| ७१ **बृहद्योगतरङ्गिणी**—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ **परिभाषेन्दुशेखरः**—वैद्यनाथकृतगदाख्यटीकायुतः । | २ | ६ |
| ७३ **गायत्रीपुरश्चरणपद्धतिः**—श्रीमच्छंकराचार्यविरचिता । | १ | ८ |
| ७४ **द्राह्यायणगृह्यसूत्रवृत्तिः**—रुद्रस्कन्दप्रणीता । | १ | ० |
| ७५ **ब्रह्मसूत्रभाष्यार्थरत्नमाला**—सुब्रह्मण्यविरचिता । | ४ | ४ |
| ७६ **ईशकेनकठोपनिषदः**—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ **वेदान्तसूत्रमुक्तावलिः**—ब्रह्मानन्दसरस्वतीविरचितः । | २ | ६ |
| ७८ **त्रिस्थलीसेतुः**—नारायणभट्टविरचितः । | ३ | १२ |
| ७९ **छान्दोग्योपनिषत्**—मिताक्षराव्याख्यासमेता । | २ | ० |
| ८० **वाक्यवृत्तिः**—श्रीमच्छंकराचार्यकृता सटीका । | ० | ८ |
| ८१ **आश्वलायनश्रौतसूत्रम्**—नारायणकृतवृत्तिसमेतम् । | ४ | ११ |
| ८२ **ब्रह्मसूत्रवृत्तिः**—हरिदीक्षितविरचिता । | २ | ७ |
| ८३ **संक्षेपशारीरकम्**—व्याख्यासहितं भागद्वयोपेतम् । | ९ | १ |
| ८४ **अद्वैतामोदः**—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | २ | ० |
| ८५ **ज्योतिर्निबन्धः**—शूरमहाठश्रीशिवराजविरचितः । | ३ | १५ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

# पश्वालम्भमीमांसा ।

वे० शा० रा० रा० किंजवडकरोपाह्ववामन-
शास्त्रिविरचिता ।

एतत्पुस्तकं

वे० शा० सं० रा० रा० आगाशे इत्युपाह्वैः
काशिनाथशास्त्रिभिः संशोधितम ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

—:+×+:—

शालिवाहनशकाब्दाः १८४५

खिस्ताब्दाः १९२३



मूल्यं दशाऽऽणकाः ( ॥० )

## ॥ भूमिका ॥

हन्त भोः समुपस्थितोऽयं तथाविधो विस्मयकरः समयः, यत्र करकोऽपि वा भवतु विद्वानुताविद्वान्बहुश्रुतो वाऽनाघ्रातधर्ममीमांसासूत्रकुसुमगन्धो वाऽऽस्तिको वा गलहस्तितशास्त्रमर्यादो वा समयानुसारं परिवर्तयितुमेव कामयते भगवन्तं सनातनं वैदिकं धर्मम्। सर्वोऽपि ननु स्वातन्त्र्येणैव कपोलकल्पितानात्मनो विचारानपरेषां पुरस्तात्प्रादुर्भावयितुं प्रयतते। प्रयस्यति चेत्ततः पदशो वाक्यशो वा प्रमाणाभासान्यर्थान्तरप्रयुक्तानि संगृह्य संगृह्य स्वीयं मतमुपोद्बलयितुम्। अपरामृशन्नेव पौर्वापर्यं वाक्यजातस्याचिन्तयन्नेव श्रुतिलिङ्गादिप्रमाणानां प्राबल्यदौर्बल्यमननुसंदधान एव वाक्यार्थविचारमगणयन्नेव च मीमांसान्यायप्रवृत्तिं शास्त्रार्थं सावष्टम्भं निर्णिनीषति, निर्णयन्नपि वा नापत्रपत इत्यहो कौटिल्यं कालस्य विजृम्भितं च व्यामोहस्य। सत्येवं नैताद्विरमापयत्यस्मान्, यत् यदि कोऽपि मितंपचमतिर्निर्गलमद्ययावदस्खलिता वैदिकसंप्रदायपरीवाहेण समर्थितं परःसहस्रैः श्रुतिस्मृतिवचनैः प्रमाणमूर्धन्यैर्निर्विचिकित्सं व्यवस्थापितं भूयोभिरास्तिकधौरेयैर्दार्शनिकप्रकाण्डैः स्वप्नेऽप्यसंभावितदोषलेशं वैदिके क्रतौ शिवंकरं पश्वालम्भं, संचिचीषुरिव स्थानमुत्तमं पापनिकायमश्रेयस्करं च प्रतिपिपादयिषुः च सप्रगल्भं साटोपं च प्रजल्पेद्दीपयेत्समाह्वयेच्च विवदितुमास्तिकमूर्धन्यानिति। समयेऽस्मिन्नास्तिकाः पुनर्विद्वांसः 'न हि रुतमनुरौति ग्रामसिंहस्य सिंहः' इत्याभियुक्ताभाणकं मनसि मन्वाना उपेक्षया जोषंभावमेव यदि भजेरंस्तर्हि प्रायेण परतन्त्रप्रज्ञा अर्धमुग्धा भूयांसो जनाः श्रद्दधाना अपि भगवति वैदिके धर्मेऽनुतिष्ठासवः श्रौतानि कर्मजातानि महान्तं व्यामोहमापन्ना इत्थंक्रियाविवेकविधुराः कर्तव्यतो हीयेरन्, आत्यन्तिकं चानर्थमृच्छेयुः, श्रेयसश्च प्रतिहन्येरन्निति अनिच्छन्तोऽपि विवादाध्यवसायं 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायेन संभाव्यमानं यागीयपशुहिंसाया अधर्मत्वं प्रत्याख्याय परमार्थभूतं वैदिकं पन्थानं प्रथयितुं किंचिदिव व्यापारयामो लेखनीमात्मीयाम्।

अत्र केचन समुत्तिष्ठन्ते-"ननु भो" यदेतद्यज्ञादिकमनुष्ठीयते नैतच्छ्रेयो जनयितुमीष्टे, अपितु बलवत्पातकमेवानुबध्नाति प्रत्यक्षमेव पशूनां निर्दयं हिंसनादिति। न च "अग्नीषोमीयं पशुमालभेत, वायव्यं श्वेतमालभेत भूतिकामः, ब्रह्मणे ब्राह्मणमालभेत" इत्यादीन्यसंख्ये-

यानि श्रौतवाक्यकदम्बानि घण्टाघोषमुद्घुष्यन्ति पश्वादीनां क्रतुष्वालम्भनम्। यथा च वैदिकं निखिलमपि वाक्यजातं स्वतः प्रामाण्यमाटीकृतं तथा पराक्रान्तं पूर्वमीमांसायां भगवता महामुनिना जैमिनिना इति कथमेतच्चोद्यमवतरति यागीयहिंसा पापानुबन्धिनीति, इति वाच्यम्। त्वदुदाहृतवचनानां भूतिकामादिपदस्वारस्येन काम्यपरत्वस्यैव प्रतीयमानत्वात्। निन्दिताश्च काम्यकर्मानुष्ठातारो भगवता गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः"।

"कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्॥"

"त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।"

'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यादिना बहुप्रकारेण। आम्नायते चोपनिषत्स्वपि 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादौ बहुत्र। युज्यते चैतत्। स्वस्य सुखं संपादयितुं दयनीयानामस्वतन्त्राणां मूकदीनानां प्राणिनां सौनिकैरिव ब्राह्मणब्रुवैर्धार्मिकंमन्यैर्व्यापादनं नैर्घृण्येन क्रियमाणं तेष्वेव पशुत्वमसुरत्वं वा प्रद्योतयति। 'न हिंस्यात्सर्वभूतानि' इति दंध्वन्यमानोऽयं प्राणिवधनिषेधः कथं नु नाम पशुं विशसितारं यामीयातना नानुभावयेत्? न चात्र प्रत्यवस्थातव्यं केनापि 'अग्नीषोमीयं पशुमालभेत' इत्यादिवाक्यं सामान्यतः प्रवृत्तं न हिंस्यादिति वचनं संकोचयेदेवेति। अग्नीषोमीयं पशुमालभेतेत्यादिवाक्येन प्राकरणिकेन पश्वालम्भस्य क्रत्वर्थत्वमिष्टसाधनत्वं च प्रत्याय्येत। न तु हिंस्यादिति विधिविहितहिंसासामान्यस्यानिष्टसाधनत्वं यागीयहिंसायां व्यावर्त्येत। एकस्यैव कर्मण इष्टसाधनत्वमनिष्टसाधनत्वं चेत्युभयमपि वचनबलात्प्रमीयमाणं न विरुध्यते परकीयसुन्दरीगमनादेरिव। वस्तुतस्तु पूर्वोदाहृतेष्वग्नीषोमीयादिवाक्येष्वालभतिर्नैव हिंसामभिधत्ते किंतु स्पर्शमात्रं यथा ह्यग्निहोत्रीयदोहाधिकारे "वत्समालभेत" इति वाक्य आलभतिः स्पर्शमात्रमाचष्टे। स्पष्टं चैतदध्वरमीमांसायाम्। हिंसा पुनरङ्ग्यागविधानेन विशसनप्रकारेण चाऽऽक्षेपत एव प्रतीयते न पुनः शक्त्येति सुतरां च संकोच्यसंकोचकभावो नोपपद्यते। आक्षेपलभ्यक्रत्वर्थहिंसायाः शक्यार्थभूतहिंसानिषेधस्य चान्यतराप्रामाण्यभीत्या हि संकोचः कल्प्यते। न चात्र तत्पदमाधातुं प्रभवति। अथ कथं निष्कल्पप्रवृत्तिर्हिंसाविशिष्टे यागादौ प्रामाणिकानामिति चेच्छृणु नान्तरीयकहिंसाजन्यपापफलसहिष्णूनामेव स्वर्गविषयकोत्कटरागवशीकृतान्त-

रङ्गाणां धूमादिसहिष्णूनां पाकादाविव श्येनादाविव च प्रवृत्तेरुपपद्यमानत्वात् । न च निषेध्यनिषेधयोः पुरुषार्थत्वं क्रत्वर्थत्वं वा एकमेवाऽऽवश्यकमिति प्रकृते निषेधस्य क्रत्वर्थहिंसाप्रतियोगिकत्वं नोपपद्यते किंतु पुरुषार्थहिंसाप्रतियोगिकत्वमेवेति वाच्यम् । यतो नायमेकान्तो यत्पुरुषार्थप्रतियोगिक एव पुरुषार्थनिषेधः क्रत्वर्थप्रतियोगिकश्च क्रत्वर्थनिषेध इति । व्यभिचरितत्वात् । पुरुषार्थो हि भार्योपगमः क्रत्वर्थत्वेन निषिध्यते " न स्त्रियमुपेयात् " इत्यनेन । क्रत्वर्थहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थत्वस्यापि सूपपादत्वाच्च । स्यादेतत् । यदि न स्याद्यागीयहिंसायाः पापाभावप्रतिपादकं प्रामाणिकवचननिकुरम्बम् । विहाय गजनिमीलिकां विस्फारिते चक्षुषि समुपलभ्येरन्परःशतानि वचांसि । यथा हि मनुः—

> "यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
> यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः " ॥
> "या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।
> अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ" ॥

इति । अग्नीषोमीयादिवाक्यानां निन्दाप्रायश्चित्तादिसमभिव्याहाराभावेन तद्धोऽयमवर्तनायाः स्वजन्यप्रवृत्तिविषयेऽजादिपश्वालम्भे सामान्यतोऽनर्थहेतुत्वप्रतिक्षेपकत्वमुक्तमनुवचनबलेनाध्यवसीयत इति सामान्यनिषेधशास्त्रस्य यागीयहिंसातिरिक्तपरत्वमेवोररीक्रियते । आक्षेपलभ्याया अपि यज्ञियहिंसाया विधितात्पर्यविषयत्वेनानर्थहेतुत्वप्रतिक्षेपो नानुपपन्नः । तथा चेमं सामान्यशास्त्रस्य संकोचं सुस्पष्टमेवाऽऽचष्टे श्रुत्यन्तरवचनम्—" अहिंसन्सर्वा भूतान्यन्यत्र तीर्थेभ्यः " इति । अत एव च चोराततायिवधे पापाश्रवणेन शिष्टाचारानुवृत्तिः । एवं च यागीयहिंसायाः शास्त्रविहितत्वेनानर्थहेतुत्वशङ्काया अप्यनुत्पत्त्या सामान्यनिषेधस्य तदतिरिक्तपरत्वं निराबाधमिति न काऽप्यनुपपत्तिरिति चेन्नैवम् । " तस्माद्यज्ञे वधोऽवधः " इत्यत्रावध इति नञोऽनुदरा कन्येत्यादाविवाल्पार्थकत्वस्यैवाभ्युपेयमानत्वात् । अन्योन्याभावार्थकत्वे पुनरङ्गीक्रियमाणे घटोऽघट इत्यादिवाक्यादिव वधोऽवध इत्यादिवाक्यादपि शब्दबोधानुत्पत्तेरप्रामाण्यापाताच्च । " अहिंसन्सर्वा भूतानि " इति श्रुतिस्तु अवैधहिंसात्यागस्य वैधहिंसायाश्चेष्टसाधनत्व-

मभिधत्ते। न पुनर्वेदो हिंसाया अनिष्टसाधनत्वाभावमपि । पशुं विशासित, वपामुत्खिदति, पशुमालभते, पशुं यत्संज्ञपयन्ति, इत्यादिहिंसाविधयोऽपि हिंसाया इष्टसाधनत्वमाचक्षते । नैव पुनः प्रत्याचक्षतेऽनर्थहेतुतामपि । अत एव तैत्तिरीयश्रुतौ "परागावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्" इत्यनेन परागावर्तनं विधीयमानं ज्ञापयतीति पापवत्त्वात्तस्य कर्मणः । युज्यते चैवमेव ऋत्विजां प्रायश्चित्तश्रवणमपि ।

किंच तदेव हि ब्राह्मणैर्विधीयते यन्मन्त्राः स्तुवन्ति। न चायं सोमयागो मन्त्रैः स्तूयते । यत्र च मन्त्रे तादृशं पदमाभासते तस्यान्यार्थत्वं वक्तुं सुशकम्। केवलं ब्राह्मणवाक्यैरेव विधानं त्वकिंचित्करम् । मन्त्रापेक्षया ब्राह्मणस्य दौर्बल्यात् । तस्मान्मन्त्रैरस्तुतत्वादविहितत्वाच्च न सोमयागोऽनुष्ठेयतामर्हति ।

इतश्च नानुष्ठेयः सोमयागः—यतो रामायणेऽपि प्रतिपाद्यते—"यदन्नाः पुरुषा राजंस्तदन्नास्तस्य देवताः" इत्यनेन निवृत्तमांसानां देवतार्थमपि मांसबलिप्रदानमनर्थावहमिति । ततश्चार्थादेव विज्ञायते ये तावन्मांसं भक्षयन्ति तैरेव तेऽनुष्ठेयाः समांसयज्ञा इति । न खलु कथमपि निवृत्तमांसानामनुष्ठेयः सोमयाग इति संप्रतिपन्नम् । "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु" इति भगवता याज्ञवल्क्येन लोकविद्विष्टो धर्मोऽनाचरणीयतामेवाऽऽपद्यत इति सर्वथा सर्वैर्जुगुप्स्यमानहिंसाविशिष्टमाध्वरिकं कर्म परित्यागार्हमेव प्रेक्षावताम् ।

महाभारते शान्तिपर्वणि उपरिचरोपाख्याने "बीजैर्यज्ञेषु यष्टव्यं छागं नो हन्तुमर्हथ" इत्येतिह्यस्योपलभ्यमानत्वात्तत्रैवान्यत्रापि हिंसामययज्ञानां बहुशो विगर्हितत्वात्, यज्ञानां जपयज्ञोऽस्मि, एष मे सर्वधर्माणाम्, इत्यादिषु च भगवद्भक्तैरेव सर्वाधिक्येन तोष्टूयमानत्वाच्च सोमयागस्यानुष्ठेयत्वं सेत्स्यति ।

किंच कोऽयमभिनिवेशः—सत्यपि हिंसाविधुरे सोमप्रतिनिधिभूते समञ्जसतमे कर्मणि हिंसाप्रधानः सोमयाग एवानुष्ठातव्य इति । स्पष्टमेव च प्रतिनिधिमाचक्षाते भगवन्तौ मनुयाज्ञवल्क्यौ—

"इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे" ॥ ( मनु० ११-२७ )

"प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥
एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।"
इति ( याज्ञ० आचाराध्या० १२५ ) ।

एकादशस्कन्धे भागवतेऽपि "वृत्त्यै परं घ्नन्ति पशूनतद्विदः" । "पशोरालभनं न हिंसा" "वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् । न तु श्रौतेन पशुना मां यजेत" इत्यादिना बहुधा विनिन्दित एव हिंसायुक्तः क्रतुः ।

भगवानापस्तम्बोऽप्यमुमेवार्थमुपष्टभ्नाति "अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसंभवन्ति" इत्यादिना "पुनरेवमं लोकं प्रतिपद्यन्ते" इत्यन्तेन ग्रन्थेन ।

मनुनाऽपि उपबृंहितोऽयमेवार्थो मुन्यन्नैरेव पुरोडाशचरुनिर्वपणयज्ञानामनुष्ठेयत्वमभिदधता, "अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः । निवृत्तिस्तु महाफला" इत्यनेन । यदि च नैव सर्वथा त्यक्तुमिष्येत सोमयागस्तदा पिष्टपशुमालभ्यैष्टं निर्वर्त्यताम् । तथैव चानुशास्ति भगवान्मनुरपि । 'कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा' इति । अनुकूलश्चात्र वैष्णवानामाचारः ।

विशेषतश्चेदृक्तमे कराले कलिकाल एवंविधं कर्मानुष्ठीयमानं न कथंचिदपि धिनोति विदुषां चित्तम् । आधानमधुपर्कश्राद्धादौ हिंसामयो विधिः कलौ यथा जुगुप्सापादकत्वात्परित्यज्यत एवमिहापि पशुहिंसा दूरतः परिहर्तव्या । अत एव च युज्यते याज्ञवल्क्यादिभिरुदीरितः प्रतिनिधिः ।

तथा च यागीयहिंसाविधायकवाक्यानां काम्यकर्मपरत्वात्काम्यकर्मणां च बहुत्र निन्दितत्वात्, स्वसुखसंपिपादयिषयाऽस्वतन्त्राणां पशूनां मारणस्यानुचितत्वाद् विधिवाक्यैर्यागीयहिंसायामिष्टसाधनत्वबोधनेऽपि सामान्यशास्त्रप्राप्तस्यानिष्टसाधनत्वस्यानिराकरणात्, स्पर्शस्यैवाऽऽलभतिशब्दार्थत्वेन हिंसाया आक्षेपलभ्यत्वेन संकोच्यसंकोचकभावानुपपत्तेः, अवर्जनीयहिंसाजन्यपापफलसहिष्णूनामेव हिंसाविशिष्टे कर्मणि प्रवृत्त्युपपत्तेः, 'यज्ञार्थं पशवः सृष्टाः' इत्यादिषु नञोऽल्पार्थक-

त्वाध्यवसयाच्च पापजनकमेव हिंसाघटितं यागादिकर्मेति न तु तदनुष्ठीय-मानं श्रेय आवहेत्प्रत्युतानर्थमेव संपादयेदिति ।

तदेतदज्ञानविजृम्भितमेव । न पुनः कदाचिदपि शक्यं सर्वेषां हिंसा-विशिष्टकर्मणां काम्यत्वमेवेति, स्यात्पुनर्वायव्यं श्वेतमालभेत भूतिकाम इत्यादिवाक्यविहितानां कर्मणां काम्यत्वं, तावता वसन्ते वसन्ते ज्योतिषा यजेत, सोमेन यजेत, पशुना यजेत, इत्यादिवाक्यविहितक-र्मणां नित्यत्वं नापह्नोतुं शक्यम् । वीप्सादिभिर्हि तेषां तत्र तत्र मीमां-साशास्त्रे नित्यत्वस्य व्यवस्थापितत्वात् । कामं निन्द्यन्तां नाम काम्यानि कर्माण्यनित्यत्वेन किं तावता प्राप्तं तदङ्गहिंसायाः । किंच यदेतत्काम्यं कर्मजातं निन्द्यते तत्किं हिंसाविशिष्टत्वेनाऽऽहोस्वित्काम्यत्वेन? नाऽऽद्यः । नित्यानामपि हिंसाविशिष्टत्वेन निन्द्यत्वापातात् । निरुक्तगीतावाक्येषु निन्दाप्रयोजकहिंसाघटितत्वप्रतिपादकपदाभावाच्च । नान्त्यः । काम्य-त्वेन निन्द्यत्वेऽपि फलं प्रेप्सुनाऽङ्गसाकल्यसंपादनाय हिंसाया अव-श्यकर्तव्यत्वात् । अङ्गविनाकृतं हि प्रधानं फलपर्यवसाय्यपूर्वं न प्रसवितुमीष्टे । दंशमशकमत्कुणानपि स्वप्नेऽपि अव्यापादयतामास्तिक-शिखामणीनामकरणे प्रत्यवायपरिहारार्थमेव केवलं हिंसाघटितेषु नित्य-कर्मसु प्रवृत्तिदर्शनात् न जातु अपि शङ्कनीयं स्वसुखोपार्जनाय यज्ञे पशून्हिंसन्तीति । यदप्युक्तम्—एकस्यैव कर्मण इष्टसाधनत्वमनिष्टसाध-नत्वं चेत्युभयमपि वचनबलात्प्रमीयमाणं न विरुध्यते, इत्यादि । तन्न चारु । अग्नीषोमीयं पशुमालभेत, इति वाक्येन यागीयपश्वालम्भ-नस्य न केवलमिष्टसाधनत्वं प्रत्याय्यतेऽपितु बलवदनिष्टाननुबन्धित्व-मपि । अन्यथा विषसंपृक्तभोजनविधायकवाक्यस्यापि प्रामाण्यापत्तिर्नि-ष्कम्पं तादृशभोजने प्रवृत्त्यापत्तिश्च । अतो हि बलवदनिष्टाननुबन्धित्व-विशिष्टेष्टसाधनत्वमेव विधिना बोध्यत इत्यवश्यमभ्युपेतव्यम् । अनि-ष्टसाधनत्वमपि केवलं निषेधवाक्येन न बोध्यते । तत्रापि बलवदनिष्ट-जनकत्वमेव बोध्यते । अत्र च बलवत्त्वमिष्टोपायानुष्ठानप्रयुक्तसकलवि-धेष्टावधिकाधिक्यरूपत्वम् । तथा च विधिनिषेधबोधितयोरीदृशेष्टानिष्ट-साधनत्वयोरेकत्र समावेशो न संघटते मिथो विरोधात् । प्रतियोगिनः पुरुषार्थत्वे निषेधस्यापि पुरुषार्थत्वमिति नियमस्य पुरुषार्थपरस्त्रीगमन-निषेधस्य क्रत्वर्थत्वदर्शनेन व्यभिचारेऽपि प्रतियोगिनः क्रत्वर्थत्वे

निषेधस्यापि क्रत्वर्थत्वनियमस्य क्वापि व्यभिचारादर्शनात् । यच्चाप्यभिहितम्—अग्नीषोमीयादिवाक्येष्वालभतिर्नैव हिंसामभिधत्ते किंतु वत्समालभेतेतिवाक्य इव स्पर्शमात्रम्, इत्यादि तदप्यपेशलम् । अग्नीषोमीयं पशुमालभेतेत्यादौ साऽस्य देवतेत्यधिकृतेन च्छप्रत्ययेन प्रतीयमानो द्रव्यदेवतासंबन्धो यागं विनाऽनुपपन्न इति यागवाचकपदमावश्यकम्, लाघवादालभतिनैव यागो लक्ष्यत इति शब्दबोध्यत्वमेव हिंसाया न पुनः स्पर्शवाचकत्वमालभतेः । अथ चेदभिनिविशसे शक्त्या नैव हिंसाऽऽलभतिना बोध्यते, आक्षेपत एव च यागोपपत्त्यर्थं कल्प्या सेति तदा निभालय चक्षुषी विस्फार्य "वपामुत्खिदति पार्श्वत आच्छ्यति घ्नन्ति वा एतत्पशुं संज्ञपयन्ति पशुं विशास्ति हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः" इत्यादीनि सुस्पष्टमेव पशुहिंसामाचक्षाणानि वचोजातानि । अथ शङ्केथाः—वत्समालभेतेत्यत्र कथमालभतिः स्पर्शमाचष्ट इति । तदा यागतात्पर्यग्राहको द्रव्यदेवतासंबन्धस्तत्र न प्रतीयत इति समाधानं मन्वीथाः । एतेनाऽऽक्षेपलभ्या हिंसा सामान्यशास्त्रं न बाधितुमीष्ट इति परास्तम् । यच्चोक्तं पुरुषार्थो हि भार्योपगमः क्रत्वर्थत्वेन निषिध्यते न स्त्रियमुपेयादित्यनेन । यागीयहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थत्वस्यापि सूपपादत्वादिति तन्न समञ्जसम्—

न हिंस्यादिति शास्त्रस्य यागीयहिंसाशास्त्रस्य चोक्तनियमव्यभिचारेण विरोधे सत्यपि सामान्यविशेषभावपर्यालोचनेन बाध्यबाधकभाव एवाभ्युपगम्यते । विशेषशास्त्रोद्देश्यतावच्छेदकावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यताकत्वरूपसामान्यशास्त्रत्वं न हिंस्यादिति वाक्ये निराबाधमिति न काऽप्यनुपपत्तिः । यागीयहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थत्वाभ्युपगमे सर्वमपि कर्मजातं परम्परया पुरुषोपकारकमेवेति हन्त पुरुषार्थत्वं केवलान्वयि संपद्येत? व्याहन्येत च "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यनेन चतुर्थाद्यन्याये निर्दिश्यमानो विभागः । सामान्यधर्मव्याप्ययोः पुरुषार्थत्वक्रत्वर्थत्वयोरेकत्र समावेशेन मिथो विरोधाभावात् । आमनन्ति च परिणतप्रज्ञाः सामान्यधर्मव्याप्यपरस्परविरुद्धनानाधर्मप्रकारकज्ञानानुकूलव्यापारं विभागपदव्यपदेश्यम् ।

यच्च जल्प्यते—तस्माद्यज्ञे वधोऽवध इति मनुवचनेऽनुदरा कन्येत्यादाविव नञोऽल्पार्थकत्वमेवाङ्गी क्रियत इति तदतिसाहसम्' नञोऽभावत्वावच्छिन्नमात्रवाचकत्वस्य सर्वदार्शनिकसंप्रदायसंप्रतिपन्नत्वेनाल्पार्थकत्वं लक्षणयैवाङ्गीकरणीयम् । कुतो नन्वायास्यते शक्त्यैव निर्वाहे लक्षणाश्रयणेनाऽऽत्मा । न चापि भ्रमितव्यम् "अहिंसन्सर्वाभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतिर्वैधहिंसाया इष्टसाधनत्वमेवाभिधत्ते। न पुनरनिष्टसाधनत्वाभावमपीति । उभयोर्विरोधेन दत्तोत्तरत्वात् । एकतरसत्त्वे तदितराभावस्य नान्तरीयकत्वात् । विधिस्पृष्टे च न प्रसरति निषेधः । विधयश्च यागीयहिंसाप्रतिपादका भूयांस इत्यवोचाम । अध्वर्योः परागावर्तनं तु संज्ञप्तिहोमार्थं न पुनः पापभियेति । ऋत्विजां प्रायश्चित्तश्रवणमपि प्रतिग्रहनिमित्तं न तु हिंसानिमित्तमित्यवधेहि ।

यदप्युल्लपितम्—यन्मन्त्राः स्तुवन्तीत्यादि । तदप्यविचारितरमणीयम् । न चायमस्ति नियमः, मन्त्रैः स्तूयमानमेव ब्राह्मणैर्विधीयत इति । प्रभुसंमिततया ब्राह्मणवाक्यैर्विधीयमानं कर्म मन्त्रार्थवादादयः स्तुवीरंश्चेत्पदैकवाक्यतया वाक्यैकवाक्यतया वा साफल्यमनुविन्देरन् । क्वचित्स्तवनाभावमात्रेण विधित्वं नापह्नोतुं सुशकम् । अत एव च निरर्थवादा विधयोऽमन्त्रसाध्यानि च कर्माणि तत्र तत्रोपलभ्यन्ते । अत एव प्रत्यपादि सार्थक्यं मन्त्राणामनुष्ठेयार्थमारकत्वेनैव न तु विधेयस्तावकत्वेन । अथ यद्याग्रहासि मन्त्रैः स्तूयमानत्वमेव विधेयताप्रयोजकमिति । तदा सोमस्याऽऽर्चिके नवमे मण्डले परःशताभिर्ऋग्भिः स्तूयमानत्वं नाऽऽकलयसि किं !

न च तेषां मन्त्राणामन्यार्थतां नेष्याम इति युक्तं वक्तुम् । भगवत्सायणाचार्यैः सोमपरताया एव भाष्ये प्रतिपादितत्वात्, क्वचिच्च ऋक्षु हिंस्यमानपशुविषयक्यैव स्तुतिः स्पष्टमुपवर्णिता संलक्ष्यते । यथा—

" प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।
सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः" ॥(तै०स० ३-१-४)

सायणभाष्यम्—हे पशो पूर्वे देवास्त्वदीयं वृत्तान्तं जानन्तोऽङ्गेभ्यः परि त्वदीयावयवेभ्य ऊर्ध्वमाचरन्तं ते त्वदीयं प्राणं प्रतिगृह्णन्ति अस्माकमधीनोऽयमिति स्वी कुर्वन्ति । त्वं तु देवा येषु पथिषु यान्ति तैः पथिभिः स्वर्गं याहि । प्राणरूपेण स्वर्गं गत्वाऽवशिष्टैः शरीरावयवैरोषधीषु प्रतितिष्ठ पुरोडाशादिवद्धविर्भवेत्यर्थः ।

" इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये ।
अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् " ॥

( तै० सं० ३–१–४ )

सा० भा०—हे पशुपतेऽग्ने यदस्मिन्दिने सुकृतस्य मध्ये सम्यगनुष्ठितस्य ज्योतिष्टोमस्य कर्मणो मध्य इमं पशुं बध्नामि अतस्त्वमनुमन्यस्व । वयं सुयज्ञा शोभनेन यज्ञेन यजाम । इदं हव्यं देवानां जुष्टं प्रियमस्तु ।

"जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ ।
घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः " ॥

( तै० सं० ३–१–४ )

सा० भा०—हे जातवेदस्त्वं वपया सह देवान्गच्छ । हि यस्मात्त्वं प्रथमो होता बभूथ मनुष्यहोतुः पूर्वभावी बभूविथ तस्मात्त्वं घृतेन देवानां तनूर्वर्धयस्व । ते च देवाः स्वाहाकारेण समर्पितमिदं हविर्भक्षयन्तु ।

" तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनाऽऽगा हव्या जुषस्व मेधिर " ॥

( ऋ० सं० ३–२–२२ )

सा०भा०—अध्रिगो, अधृतगमन सततगमनस्वभाव, अत एव शचीवः शक्तिमन्हे, अग्ने तुभ्यं त्वदर्थं मेदसो मेदोरूपस्य हविषो घृतस्य च स्तोकासो बिन्दवः श्चोतन्ति स्रवन्ति तस्मात्कविशस्तः कविभिः कर्माभिज्ञैर्होत्रादिभिः स्तुतस्त्वं बृहता प्रभूतेन भानुना तेजसा सहितः सन्नागा अस्मदीयं पशुयागमभ्यागच्छ । आगत्य च मेधिर प्रज्ञावन्नग्ने हव्या अस्माभिर्दीयमानानि वपादीनि हवींषि जुषस्व सेवस्व ।

" ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहि " ॥

( ऋ० सं० ३–२–२२ )

सा०भा०—हे, अग्न ओजिष्ठमतिशयेन सारयुक्तं मेदो वपाख्यं हविर्मध्यतः पशोर्मध्यभागात्ते त्वदर्थमुद्धृतमुद्धृतमध्वर्य्वादयो वयमस्मिन्पशो ते तुभ्यं प्रददामहे, उद्धृतं तद्वपाख्यं हविः प्रयच्छामः । वसो सर्वस्य जगतो वासयितर्हे, अग्ने त्वच्यधि वपायामुपरि ये स्तोका घृतमिश्रा

बिन्दवस्ते ते त्वदर्थं श्चोतन्ति स्रवन्ति । यद्वा ते तव त्वच्यधि ज्वालाख्यशरीरस्योपरि श्चोतन्ति तान्स्तोकान्देवशो देवेषु प्रति विहि प्रत्येकं विभजस्व ।

यद्यपि स्वस्वमतिवैभवेन मन्त्राणामनेकेऽर्था उत्प्रेक्षितुं शक्यन्ते, अथापि ब्राह्मणविहितानां कर्मणां प्राशस्त्यसंपादकोऽर्थः स्वयमाविर्भवन्न गोपयितुं शक्यते । केचित्तु ऐतरेयब्राह्मणे श्रूयमाणाम्—

" पशुर्वै नीयमानः स मृत्युं प्रापश्यत्सदेवान्नान्वकामयदेतुं तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्याम इति स तथेत्यब्रवीत्तस्य वै मे युष्माकमेकः पुरस्तादेत्विति तथेति तस्याग्निः पुरस्तादैत्सोऽग्निमनु प्राच्यवत " ( ऐ० ब्रा० ६ । ६ । )

सा० भा०—शमित्रदेशं प्रति नीयमानः पशुः प्रत्यक्षेण मृत्युं दृष्टवान् । ततः स पशुर्देवानन्वेतुं नान्वकामयताऽऽगन्तुं नैच्छत । ततो देवाः पशुं प्रत्येवमब्रुवन्हे पशो त्वमागच्छ त्वया सह वयं सर्वे स्वर्गं गच्छाम इति । पशुश्च तदङ्गीकृत्य देवान्प्रत्येवमब्रवीत्, युष्माकं मध्ये कश्चिद्देवो मम पुरस्ताद्गच्छत्विति । तद्वचनमङ्गीकृत्याग्निर्देवस्तस्य पशोः पुरस्तादगच्छत । ततः स पशुस्तमग्निमनु स्वयमपि तुष्टः सन्प्रकर्षेणागच्छत् ।

" एकधाऽस्य त्वचमाच्छ्यतात्पुरा नाभ्या अपि शसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वादिति पशुष्वेव तत्प्राणान्दधाति " ॥

( ऐ० ब्रा० ६ । ६ । )

सा० भा०—एकधैकविधया विच्छेदराहित्येनास्य त्वचमाच्छ्यतात्समन्ताच्छिन्नां कुरुत । नाभ्या अपि शसच्छेदात्पूर्वमेव वपामुत्खिदतादुद्धरत । ऊष्माणमुच्छ्वासमन्तरेव वारयध्वान्निवारयत पिहितास्यं संज्ञपयतेत्यर्थः । तद्भागपाठेन पशुष्वेव प्राणान्संपादयति ।

" तस्य वपामुत्खिद्याऽऽहरन्ति तामध्वर्युः
स्रुवेणाभिघारयन्नाह स्तोकेभ्योऽनुब्रूहीति " ॥

( ऐ० ब्रा० ७ । २ । )

सा० भा०—तस्य पशोर्वपामुदरगतां वस्त्रसदृशीमुत्खिद्योद्धृत्य होमार्थमाहरन्ति। तां च वपामध्वर्युरभिघारयन्प्रैषमन्त्रं ब्रूयात् । तदेतदापस्तम्बो विशद-

यति—' त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति ' ॥

" तद्यत्स्तोकाः श्चोतन्ति सर्वदेवत्या वै स्तोका नेन्म इमेऽनभिप्रीता देवान्गच्छानिति " ॥

( ऐ० ब्रा० । ७ । २ । )

सा० भा०—तत्तस्यां वपायां तदानीमेव क्रियायामार्द्रायां श्रप्यमाणायां यदा स्तोका नीरबिन्दवः श्चोतन्ति निर्गत्याधः पतन्ति तदानीं सर्वदेवानां प्रियत्वादिमे स्तोकाः स्वयमनभिप्रीता अस्मासु प्रीतिरहिता देवान्गच्छान्गमिष्यन्ति । तथा सति महदेतदस्माकं भयकारणं तन्मा भूदित्यभिप्रेत्य स्तोकप्रीणनार्थमिदं प्रैषानुवचनम् । अत्र नेदित्ययं शब्दः परिभयार्थः ।

"पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्सोऽश्वं प्राविशत्तस्मादश्वो मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त स किंपुरुषोऽभवत् " ॥ ( ऐ० ब्रा० ६ । ८ । )

सा० भा०—पुरा कदाचिद्देवाः स्वकीये यज्ञे पुरुषं मनुष्यं पशुमालभन्त पशुं कृत्वा तेन पशुना यष्टुमुद्युक्ताः । तस्मादालब्धाद्यष्टुमुद्युक्तान्मनुष्यपशोर्मेधो मेध्यो यज्ञयोग्यो हविर्भाग उदक्रामन्मनुष्यं परित्यज्यान्यत्रागच्छत् । गत्वा च स भागोऽश्वं प्राविशत् । यस्मादेवं तस्मादश्वो यज्ञयोग्योऽभवत् । अथ तदानीमुत्क्रान्तमेधं परित्यक्तहविर्भागमेनं मनुष्यं देवा अत्यार्जन्नातिशयेन वर्जितवन्तस्तमिमं पशुत्वमपि नाकुर्वन् । देवैः स्वीकृत्य परित्यक्तः स मनुष्यः किंपुरुषः किंनरावान्तरजातीयः ।

"तेऽश्वमालभन्त सोऽश्वादालब्धादुदक्रामत्स गां प्राविशत्तस्माद्गौर्मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त स गौरमृगोऽभवत्" ॥

( ऐ० ब्रा० ६ । ८ )

सा० भा०—आलब्धादश्वान्मेधो यज्ञयोग्यभाग उत्क्रम्य गां प्राविशत्स गौर्यज्ञयोग्य आसीत् । तदानीमयोग्यत्वेन त्यक्तः सोऽश्वो गौरमृगोऽभवद्यस्य शृङ्गावपि लोमशौ भवतः ।

"ते गामालभन्त स गोरालब्धादुदक्रामत्सोऽविं प्राविशत्तस्मादविर्मेध्योऽभवदथैनमुत्क्रान्तमेधम-

त्यार्जन्त स गवयोऽभवत्तेऽविमालभन्त सोऽवेरा-
लब्धादुदक्रामत्सोऽजं प्राविशत्तस्मादजो मेध्योऽभ-
वदथैनमुत्क्रान्तमेधमत्यार्जन्त स उष्ट्रोऽभवत्" ॥
(ऐ० ब्रा० ६।८।)

"सोऽजे ज्योक्तमामिवारमत तस्मादेष
एतेषां पशूनां प्रयुक्ततमो यदजः" ॥ (ऐ० ब्रा० ६।८।)

सा० भा०—स मेधाख्यो यज्ञयोग्यभागस्तस्मिन्नजे ज्योक्तमामिवातिशयेन चिरकालमेवारमत क्रीडितवांस्तस्माच्चिरकालमेव सद्भावाद्योऽयमजोऽस्ति स एष एतेषां पूर्वोक्तानां पशूनां मध्ये प्रयुक्ततमः शिष्टैरतिशयेन प्रयुक्तः।

इत्याख्यायिकामापाततो निरीक्षमाणाः पिष्टमयपशोरालम्भनमेवैतादृशार्थवादाभिप्रेतमिति तदेव करणीयं न साक्षात्पशुरालम्भ्य इति संभावयन्ति । नैतत्समञ्जसतामवगाहते—यतो नाऽयं पिष्टपशोर्विधायकः स्तावको वाऽर्थवादोऽपि तु पशुपुरोडाशयागस्य वपायागाङ्गस्य स्तावको भूतार्थवादः । नैव स्वप्नेऽपि संभावनीयं पश्वभावे पुरोडाश इति । यदि च वपायागो नैतदाख्यायिकयाऽनुमन्यत इति बलात्संभावयति तदाऽस्या एवाऽऽख्यायिकायाः पूर्वं पश्चाच्चाभिहितानि पश्वङ्गावदानादीनि कां गतिमालम्बेरन । तस्मात्पशुपुरोडाशस्यैवैषा स्तुतिर्न पशुप्रतिनिधिपुरोडाशयागतात्पर्यिका ।

अथ प्रैषाध्यायेऽपि दृष्टिं विकिरसि चेज्जानीषे वपायागस्य विहितत्वम् ।

" होता यक्षदग्नीषोमौ छागस्य वपाया
मेदसो जुषेतां हविर्होतर्यज ।
होता यक्षदग्नीषोमो हविष आसाम् " ॥

यच्चोदैरि यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः । इति रामायणान्तर्गतभगवद्रामवचनेन नानुष्ठेयः सोमयागो निवृत्तमांसैरिति । तदविमर्शभासुरम्, तत्रैवोत्तरत्र " श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति, मा " इत्यनेन यदन्नः पुरुषो भवतीत्यादेर्लौकिकश्रुतित्वं स्पष्टं प्रत्यपादि । लौकिकश्च प्रवादो वेदाक्षरैरेव विचारणीयेऽदृष्टमात्रफलक एवंविधे विषये न तथा प्रमाणभावमाटीकते ।

तुष्यतु न्यायेन प्रामाण्येऽङ्गीक्रियमाणेऽपि पुरुषो यद्भक्तो भवति तद्भक्ता एव देवता इति नैव नियन्तुं शक्यते । पलाण्डुगृञ्जनादिभक्षकैः श्राद्धादौ तन्निवेदनस्य कर्तव्यस्याऽऽपातात् । यः पुरुषो यादृशान्नविशिष्टस्तन्निरूपितासाधारणतावत्यो देवतास्तादृशान्नविशिष्टा इति नायमविनाभावः संघटते । अन्वयव्यतिरेकव्यभिचारदर्शनात् । दर्शितश्चान्वयव्यभिचारः पूर्वम् । स्मार्तहोमेषु समिच्चर्वादीनां होतव्यत्वानुशासनात् तेषां च पुरुषान्नत्वाभावात् । व्यतिरेकव्यभिचारोऽपि सुप्रदर्शः । तथा चावश्यमेवाभ्युपगन्तव्या व्यवस्था यदयं लौकिकः प्रवादः स्मार्तेष्वेव पूजाहोमबलिप्रदानाद्याचारेषु सार्थक्यमश्नुते न पुनः कथंचिदपि श्रौतानपूर्वान्विधीन्स्पर्शितुमीष्टे । तस्मान्निर्विचिकित्समनुष्ठेयः सोमयागः ।

नापि याज्ञवल्क्यस्मृतिः— अस्वर्ग्यमित्यादिका पूर्वपक्षिणो मतं साधयितुं प्रभवति । अस्वर्ग्यो हि धर्मस्त्याज्यः स्यात् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन विधिवाक्येनैव स्वर्गसाधनत्वं दृश्यमानं न जात्वपि यागस्यास्वर्ग्यतां क्षमते नापि लोकविद्विष्टत्वरूपो दोषः पदमादधाति द्विषन्तु हिंसाविशिष्टं यागं प्राकृता लोका लोकायतिकाश्च तावता न शिष्टविद्विष्टत्वमुत्प्रेक्षितुं शक्यं सादरं सानन्दं सोत्साहं सभक्त्युन्मेषं चानुभूयापि महान्तं क्लेशं बिभ्यतोऽकरणात्प्रत्यवायाच्छिष्टमूर्धन्याः परःसहस्रा महात्मानोऽन्वतिष्ठन्यागाननुतिष्ठन्ति अनुष्ठापयन्ति च ।

अत एव च भगवत्पादैर्भाषितं “ शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वादिति ” किं न स्मरसि परशिवपरावतारैः श्रीचिदम्बरदीक्षितपादैः, चतुरधिकशतप्रबन्धनिर्मातृभिः परमशैवाग्रगण्यैः श्रीमदप्पय्यदीक्षितचरणैरन्यैश्च तैस्तैर्विद्वदवतंसैरनुष्ठितांस्तांस्ताञ्ज्योतिष्टोमप्रभृतीन् । कलादसस्तन्मनसाऽपि नाऽऽकलनीयो दोषलेशोऽपि पवित्रतमे वैदिके क्रतौ ।

एतेन यः पूर्वपक्षिणा प्रोद्घाटि महाभारतीय उपरिचरोपाख्यानगोचर आक्षेपश्छागं नो हन्तुमर्हथेत्यादिः स तत्रैव चतुर्दशे श्लोके देववावदेन प्रत्यादिष्टो वेदितव्य इति नात्र वयं विशेषतो वाचमायासयितुमभिलषामः ।

यच्च—मनुयाज्ञवल्क्यप्रभृतिभिरुपदिष्टा वैश्वानरेष्टिरेव सोमप्रतिनिधितया क्रियतां किं साक्षाद्धिंसाघटितसोमेन, इत्याद्युक्तं तन्मन्दम्—

द्वितीयाद्यावृत्तौ हि सोमप्रनिधितयाऽऽद्रियते वैश्वानरेष्टिर्न पुनः प्राथमिकस्य सोमस्य स्पष्टं चैतत्त्वयैवोदाहृतमनुवचने—अब्दपर्यये प्रतिसंवत्सरमिति पदाभ्याम् । तत्रापि निष्कृत्यर्थमसंभवे, एषामसंभवे, इत्यादिनाऽसंभव एव हि सोमस्य वैश्वानरेष्टिः कर्तव्या स्यात् । न च सांप्रतं सोमः प्रतिवसन्तमसंभवी ।

यच्चोपवर्णितं भागवतं हिंसां विनिन्दतीति तदपि तत्रत्यपदेनैव प्रत्युक्तम् -वृत्त्यै जीविकार्थं पशून्घ्नन्ति तेऽतद्विदः, पशोरालभनं च न हिंसापदवाच्यम्, पापजनकत्वाभावात् । वन्यैश्च रुपुराडाशैरित्याद्यपि नहि निन्दान्यायेन नेयम् । या च यास्कोक्तिः प्रमाणत्वेन निर्दिष्टा साऽपि अशुद्धामिति चेन्न शब्दादिति न्यायेन भगवता बादरायणाचार्येणैव प्रत्याख्यातेति न वयं पुनस्तदर्थं प्रयतामहे । नापि मनुनोपबृंहितोऽर्थः पूर्वपाक्षणाऽभीष्टं साधयितुमीष्टे— अहिंसयेन्द्रियासङ्गैरित्यादिषु चकारात्पुरुषार्थहिंसाया एव निषेधो न क्रत्वर्थायाः । वैदिकैश्चैव कर्मभिरित्यग्रे स्मृतत्वात् । किं च सोऽयं सर्वोऽपि धर्मो वानप्रस्थाश्रमिणामेव न पुनर्गृहस्थानाम् । उपक्रमोपसंहारयोस्तथा दर्शनात् । मुन्यन्नेष्वपि च मांसस्यापि परिगणनाद्भक्षितेऽपि लशुन इति न्यायेनास्मदिष्टसिद्धिस्तदवस्थैव । कुर्याद्घृतपशुमित्यत्रापि रागप्राप्ताया एव हिंसायाः सङ्ग इति पदेन निन्दायाः स्मर्यमाणत्वान्न तद्वचो वैदिकीं हिंसां निषेद्धुं प्रभवति । एतेन केषांचिद्वैष्णवानां पिष्टपशुवनुष्ठानरूप आचारोऽपि निर्मूलत्वादुपेक्ष्यः । अत एव चतुरतन्त्रारण्यानीविहरणपञ्चास्यैः श्रीमद्राघवेन्द्राचार्यचरणैर्वैष्णवधुरीणैरपि पिष्टपशुखण्डनप्रसङ्ग एवमभ्यधायि । " किंच कल्पसूत्राणां विशृङ्खलशाखाक्रोडीकाररूपत्वेन स्मृतिभ्यः प्राबल्यात् । हिंसायज्ञपरैः कल्पसूत्रैः स्मृतीनां बाध एव युक्तः । " मनुनाऽपि या वेदविहितेत्यादिषु बहुधा वैदिकहिंसाया अनुष्ठेयत्वेन पापाजनकत्वेन च विधीयमानत्वात् ।

न चाप्यतिशङ्कनीयमीदृशे कालेऽथ काले हिंसायुक्तो ज्योतिष्टोमयागादिविधिः परित्यक्तव्य इति । यतो न क्वापि श्रुतौ स्मृतौ वोल्लिख्यते कलियुगे नानुष्ठेयो यागीयहिंसाविधिरिति । आधानमधुपर्कादौ तु कल्पसूत्रकारैः श्रौता एव विकल्पाः प्रादुरकारिषत । नैवं यागीयहिंसायाः क्वापि विकल्पाः प्रोच्यमानाः कर्णपथमवतरन्ति । तथा च काम्यकर्मणां

निन्दितत्वेऽपि ज्योतिष्टोमादिकर्मणामकरणे प्रत्यवायापादकत्वरूपनित्यत्वोत्कीर्तनात्। आलब्धस्य च पशोः स्वर्गतस्य निरतिशयसुखभोक्तृत्वाम्नानात्, एकत्र चेष्टसाधनत्वानिष्टसाधनत्वयोः समावेशानुपपत्तेः, आलभतेर्द्रव्यदेवतासंबन्धान्यथानुपपत्त्याऽनुमेययागार्थकत्वात्, हिंसायाः शब्दबोध्यत्वात्, सामान्यविशेषभावाभावपर्यालोचनया बाध्यबाधकभावस्य सूपपादत्वात्, नञोऽल्पार्थकत्वानुपपत्तेश्च, हिंसाघटितमप्याध्वरिकं कर्म विशुद्धमिति न किल स्वप्नेऽपि संभाव्यतां तदनुष्ठायिनां पापलेशगन्धोऽपि। आत्यन्तिकं च निरपेक्षं च श्रेयः समासाद्यत इति सर्वमनवद्यम्। एवमिदं केषांचिदर्धमुग्धानां प्रलपितं समासतोऽस्माभिः प्रत्याख्यातं ग्रन्थे पुनर्ग्रन्थकृता सविशेषं विशदं प्राच्यानां वैयाकरणमूर्धन्यानां मञ्जूषाकृत्प्रभृतीनां केनचिदभिसंधिनोद्भावितान् यागीयहिंसाक्षेपान् गभीरतराभिरुपपत्तिभिः प्रबलतरैश्च प्रमाणनिचयैः समूलमुन्मूल्य निराबाधं प्रापितो वैदिको धर्मपथः। एतच्च सुस्पष्टमेव प्रतिपद्येत ग्रन्थमनुवाचयद्भिः प्रियपण्डितवरेण्यैरिति न विशेषतो विज्ञापनीयमुत्पश्याम इति शिवम्।

श्रीमज्जगद्गुरुशंकराचार्य-
संस्कृतपाठशाला,
धारवाड।

इत्थिन घेट्टगिरी श्रीनागेशशास्त्री।

## ॥ पश्वालम्भमीमांसा ॥

ध्यायं ध्यायमुमापतेर्भगवतः पादारविन्दद्वयं
स्मारं स्मारमुदारतर्करुचिराः श्रीसद्गुरूणां गिरः ।
अज्ञैः कैश्चन वैदिके पथि हठादुद्भावितं दूषणं
प्रत्याख्याय समर्थ्यते विमलता यागीयहिंसाविधेः ॥ १ ॥

यैः पीतं कणभुग्वचोमृतमलं वैयासिकीं भारतीं
येऽस्ताशङ्कमनर्गलं निजमुखाम्भोजे समानर्तयन् ।
नित्यं जैमिनितत्त्वगेन्दुकचयैः सोल्लासमक्रीडिषु-
स्ताञ्श्रीन्यायमृगेन्द्रविश्रुतविरूपाक्षान्गुरून्नौम्यहम् ॥ २ ॥

मीमांसारमणीगलैकविलसद्रत्नायमानानहं ।
वावन्दीमितमां गुरूननुदिनं श्रीवैद्यनाथान्परान् ।
दत्तात्रेयगुरून्नितान्तयशसस्तच्छिष्यभावादमुं
ग्रन्थं श्रीकमलेशपूर्णकृपया ग्रथ्नात्यसौ वामनः ॥ ३ ॥

अतिरोहितमिदं समेषामपि विदुषामन्येषां च यदद्यत्वेऽपि कर्मभूमिभावेन भाव्यमानेऽस्मिन्भारते देशे श्रुतिस्मृतिसमधिगताः परापरश्रेयःसाधनीभूता धर्मा आस्तिकभूयभूषितैर्मानुषैरनुष्ठीयमाना विजयन्त इति । न खलु नावगतोऽयमपि विषयो मानुषजनुषां यत्किल कलिनामपरुषपुरुषस्यावेदस्मृतिनन्दितसरणिप्रसारणमूलकारणस्य वैदिकनिन्दकमानवसमुन्नतिसंपादनबद्धपरिकरस्य सकलसमीशितृभावमापन्नस्याऽऽज्ञापिशाच्या विगमितविवेकप्रज्ञा उल्लङ्घितानादिसाधुमर्यादा अनवरतमुत्पथसंचारसमाहितसमीहाः परमसाध्वीं वस्तुतः सकलजनाहितोपदेशनिरतामास्तिकभूयभूमभरितैर्भारतीयैर्भूमिदेवैरातिविरलैरपि दत्तावलम्बामत्यादरेण परिपाल्यमानां श्रुतिदेवीं निरालम्बीकृत्य कलुषयितुमनवरतं प्रयतमानास्तदालम्बनभूतान्केवलमाम्नायसमाम्नातसत्पथसंचारसंप्राप्तसमादरान्परतत्त्वप्रज्ञाञ्जननिकायानन्यांश्च वैदुषीविभूषितानपि मानुषानात्मसात्कर्तुं बहुधा संनह्यन्तः सर्वदा संवर्तन्त इति । तत्र—आवितलोकायतभावाः प्रत्यक्षप्रमाणैकशरणा आकृत्या परं तिर्यक्प्राणितो भिदां संप्राप्ताः केचन मानुषाकाराः प्रात्यक्षिकादर्थात्पुनरन्यत्किमस्ति, न तद् यथावत्कदाऽपि शक्यनिरूपणमिति वृथा प्रलपन्तः

केवलमामुष्मिकसंप्रत्ययानस्वतश्चप्रत्ययान्संमोहयन्तो यथाकामं देहयात्रां प्रकुर्वाणाः कालमतिवाहयन्ति । अन्ये च केचन सर्वज्ञसूक्तिप्रमाणका धर्मराजसंप्रत्ययसंपृक्ता इति मिथ्याभाणकेन भ्रामयन्तो मर्त्यान्वस्तुतः सकलसमीहितसमीचीनपदार्थनिकायावेदकेषु वेदवाक्येषु तदनुसारिमहत्सूक्तिषु चोन्मत्तप्रलपितप्रायभावमुद्भावयन्तः ‘ अहिंसा परमो धर्मः ’ इति मोहकरवाक्यजातं वाचयन्तः स्वस्वाभ्यूहमात्रपरिकल्पितमर्थजातं साधु संमन्यमाना अपापत्रपाः वृथाकालं यापयन्तः पर्यटन्ति । अपरे च पुनः कणभक्षणमतानुसारिणोऽनुमतनयनचरणमताः कापिलाः पातञ्जलाश्च सर्वज्ञपुरुषप्रणीतत्वादिनाऽऽम्नायाः प्रमाणमिति वृथा वावद्यमानाः स्वस्वतर्कप्रतर्कितार्थानुवादका इति मुधा प्रजल्पन्तः स्वस्वाभ्यूहितार्थजातप्रतिपादकान्निबन्धान्निबध्नन्तो बहूनपि मानवान्स्वाभिमतप्रस्थाने प्रस्थापयन्त आत्मानं कृतकृत्यं मन्यमानाः संतिष्ठन्ते । अत एतादृशमन्यतममतमनुप्रविशन्तो मनुजाः सर्वथाऽधःपातमापतेयुरिति पुराऽऽलोचनाक्रान्तस्वान्तौ परमकरुणापूरितान्तःकरणौ सर्वज्ञशिरोमणी उपगतपरमास्तिकभावौ व्यासजैमिनिनामानौ तपोधनाग्रगण्यौ नानाविधसन्न्यायनिर्धारणीयोच्चावचवचनव्यक्तिकमत एवाधुनातनजनैर्दुष्परिज्ञानमस्तोकमर्त्यार्थ्यमानपरमपुरुषार्थसाधनीभूतप्रवृत्तिनिवृत्तिपथप्रत्यायकं समस्तप्रमाकरणाग्रगणनीयभावमापन्नं महान्तं वेदराशिं बहुविधन्यायप्रदीपविचारात्मकशास्त्रेण संव्याख्याय वाचामगोचरं लोकोपकारमकृषाताम् । तादृशशास्त्रात्मिकां टीकामार्टीकमानमर्थं नितरां प्रतिभासयन्तं शब्दतोऽर्थतश्च दोपलवानाकलितं निबन्धसमुदायं श्रीमच्छंकरभगवत्पूज्यपादशबरस्वामिभट्टपादप्रमुखा महामहनीयाः प्रामाणिका व्यररचन् । आपस्तम्बबोधायनाश्वलायनद्राह्यायणकात्यायनसत्याषाढादिप्रभृतयोऽपि आत्यन्तिकीमार्हन्तीमापन्ना मुनिवरेण्याः सकलवेदवेद्यतत्त्वावेदकानि धर्मसूत्राणि अतिदुर्बोधप्रत्यक्षश्रुतिश्रावितश्रौतकर्माभिधकर्मवृन्दानुष्ठानप्रक्रियामतिविशदमावेदयन्ति श्रौतसूत्राणि तथाऽऽचारानुमितवेदावेदितस्मार्तकर्माख्यकर्मस्तोमप्रयोगप्रकारं मन्दधियां दुरवगमं प्रदीपयन्ति गृह्यसूत्राणि च निर्माय लोकानां बहूपाकुर्वन् । किं बहुनाऽत्यन्तमादरणीया मानव्याद्या बह्वयः स्मृतयश्च लोके जेजीयन्ते । तदत्र कापिलपातञ्जलमतानुयायिनोऽपौरुषेयानाशङ्कनीयदोषवेदमर्मानभिज्ञाञ्जनान्व्यासजैमिनिप्रभृतिभिरापस्तम्बादिमहर्षिभिर्मन्वादिभिश्च मह-

नीयैः प्रदर्शितं पन्थानमवलम्ब्य किंचिदिव वेदार्थतत्त्वं प्रतिबोधयामः।

वेदस्तावत्प्रत्यक्षादिप्रमाणाप्रमेयपरमपुरुषार्थहेतुभूतवस्त्वावेदक इतीदमपश्चिमं विपश्चिताम् । एवं खलु निरुच्यते निरुक्तकोविदैः—

प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेनं तस्माद्वेदस्य वेदता ॥ इति ।

वेदवेद्यश्चार्थो द्विधाभावमापद्यते प्रवृत्तिसाध्यो दर्शपूर्णमासादिर्निवृत्तिसाध्यं प्रत्यग्याथात्म्यज्ञानं चेति । तत्र प्रवृत्तिसाध्यधर्मसाधनीयः परमः पुरुषार्थः । आसार्वभौमस्थानादाब्रह्मलोकस्थानं तरतमभावेनानुभूयमानः ‘ स एको मानुष आनन्दः ’ इत्यादिना ‘ स एको ब्रह्मण आनन्दः ’ इत्यन्तेन वाक्यजातेन प्रतीयमानः सुखविशेषः । ज्ञानसाध्यश्च परमः पुरुषार्थोऽज्ञाननिवृत्तिपूर्वकः परमानन्दावाप्तिरूपः ‘ ब्रह्मविदाप्नोति परम् ’ इत्यादिश्रुतिशतैस्तथा बोधितत्वात् । वस्तुतस्तु परमः पुरुषार्थो मोक्ष एक एव साक्षात्परम्परया वै तत्साधनभावमापन्ना एव वेदावेदिताः समस्ता अपि धर्माः । “ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ” इत्यादिश्रुतिभ्यस्तथावगम्यमानत्वात् । तत्रापि ज्योतिष्टोमादिकर्मणां “ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ” “ कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ” इत्यादिश्रुतिस्मृतिभ्यश्चित्तशोधनपूर्वकज्ञानसंपादनद्वारा मोक्ष उपयोगः । ज्ञानस्य तु तमेव विदित्वाऽति मृत्युमेति ‘ नान्यः पन्था विद्यतेऽयनाय ’ इत्यादिश्रुतिभ्यः साक्षान्मोक्ष उपयोगः । यद्यपि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात्स्वर्गकामः, ज्योतिष्टोमेन स्वर्गकामो यजेत, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, इत्यादिश्रुतिभिः कर्माणि स्वर्गब्रह्मवर्चसादिसाधनभावमापन्नानि प्रतीयन्ते तत्कथं मोक्षहेतुभूतान्येव सर्वाणीति प्रतिज्ञायत इति चोद्यमेकमग्रगामितामागच्छेत् तथाऽपि तानि वाक्यानि गुडजिह्विकान्यायेन प्राकृताज्ञनाभिपिद्धाचरणतो निवर्त्य श्रेयःसाधनीभूतकर्मसु प्रवर्तयितुं प्रवृत्तानि न तु तदेव फलं नान्यदतः परमस्तीति प्रत्याययितुम्, यथा वा माता स्वबालकमविवेकिनमारोग्यप्रदायकौषधपाने गुडं दास्यामीति प्रलोभ्य प्रवर्तयति तथैव श्रुतिमाता स्वर्गादिफलं प्रदर्श्य तत्तत्कर्मसु बहिर्मुखाः प्रजाः प्रवर्तयति, इति सुधियामतिरोहितम् ।

कर्मणो जीवनकालपरिमितप्रयोगविधानमिति पूर्वपक्षे प्राप्ते यावच्छब्दस्य सामस्त्यवाचित्वाज्जीवशब्दस्य 'जीव प्राणधारणे' इत्यनुशासनात् प्राणनक्रियावाचित्वात् समभिव्याहृतधात्वर्थान्तरसंबन्धे धातोः परत्वेन वक्ष्यमाणाः प्रत्यया इत्यर्थके "धातुसंबन्धे प्रत्ययाः" इत्याधिकारेऽन्तर्गतेनानुशासनेन विहितस्य णमुल्प्रत्ययस्य धात्वर्थान्तरानुयोगिकस्वप्रकृत्यर्थप्रतियोगिकसंबन्धवाचित्वात्तादृशसंबन्धविशेषाकाङ्क्षायां यावच्छब्दरूपतात्पर्यग्राहकवशान्निमित्तत्वरूपसंबन्धविशेषप्रतीतेर्जीवधात्वर्थस्य यजत्यर्थ एव संबन्धस्य वक्तव्यत्वाद्भवदुक्तकालपरत्वाङ्गीकारे तद्वाचकपदस्याभावाल्लक्षणाया आपद्यमानत्वात् स्वावच्छिन्नकालवत्त्वसंबन्धेन वाच्यार्थस्य जीवनस्यैव विधाने गुणभूतजीवनकालानुरोधेन प्रधानभूतप्रयोगावृत्तेरन्याय्यत्वात्, यावच्छब्दार्थस्यापि विधानाङ्गीकारे लक्षणादोषस्य तदवस्थत्वादेतादृशगुरुभूतसंबन्धापेक्षया लघुभूतनिमित्तत्वसंबन्धेनान्वयस्य योग्यत्वाज्जीवने निमित्ते प्रकृतकर्मण एव पापक्षयोद्देशेन विनियोगान्तरविधानमिति सिद्धान्तितम् । अत्र च निमित्तत्वं न केवलानुष्ठापकत्वं कामनावत्, तथा सति यावत्पदानुवादासंगतेः । किं तु अवश्यानुष्ठापकत्वरूपं तदानीं प्रतिनिमित्तमावृत्तेरर्थलब्धत्वाद्यावच्छब्दोऽनुवादः । निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेककानुष्ठानकत्वं, राहूपरागस्य स्वान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेककस्नानकत्वात्स्नाननिमित्तत्वम् । एवं च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठातव्यत्वादवश्यानुष्ठापकजीवननिमित्तकत्वहेतुना प्रत्यवायजनकाकरणकत्वानुमानादकरणे प्रत्यवायजनकत्वमेतदधिकरणसिद्धम् । तत्र प्रवृत्तिसिद्ध्यर्थं फलाकाङ्क्षायामकरणे प्रत्यवायजनकत्वज्ञानादेव प्रवृत्तिसंभवात्करणस्य पृथक्फलाभाव एवेति प्रभाकरो मन्यते । न्यायसुधाकारादय इष्टसाधनत्वज्ञानमन्तरा प्रवृत्त्यसंभवाद्योगक्षेमसाधारणकार्यकारणभावमङ्गीकृत्य करणस्य प्रत्यवायप्रागभावपरिपालनं फलमनुमन्यन्ते । नवीनमीमांसकास्तु प्रत्यवायप्रागभावस्याजन्यत्वान्मुख्यफलत्वासंभवात् 'धर्मेण पापमपनुदति' 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिश्रुतिस्मृतीनां जागरूकत्वादानुषङ्गिकं पापक्षयाख्यं फलमनुष्ठापकं परं जीवनादिनिमित्तमित्यभिप्रयन्ति । अद्वैतप्रवर्तकमूर्धन्या भगवत्पादा नित्यानामपि कर्मणां छायागन्धन्यायेन काम्यवददृष्टस्वर्गादिफलकत्वं सोपपत्तिकं समर्थयामासुः ।

अत एव गीताभाष्यान्ते भगवन्तो भाष्यकाराः—'न हि काम्यानुष्ठानायासदुःखात्केवलनित्यानुष्ठानायासदुःखं भिद्यते, किं चान्यदविहितमप्रतिषिद्धं च कर्म तत्कालफलं न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेद्यदि तदा स्वर्गादिष्वदृष्टफलशासने चोद्यमो न स्यादग्निहोत्रादीनामेव कर्मस्वरूपाविशेषेऽनुष्ठानायासदुःखमात्रेणोपक्षयः काम्यानां च स्वर्गादिमहाफलत्वमङ्गेतिकर्तव्यताद्याधिक्ये त्वसति फलकामित्वमात्रेण न शक्यं कल्पयितुम् । तस्मान्नित्यानां कर्मणामदृष्टफलाभावो न कदाचिदप्युपपद्यते" इत्यादिग्रन्थेन प्रावदन् । आस्तां तावदियं कथाऽप्रकृता, अकरणे प्रत्यवायः सर्वेषामेव संमत इति सिद्धम् ।

किं चैतेषामकरणे प्रत्यवायः कूर्मपुराणे दर्शितः—

"नास्तिक्यादथवाऽऽलस्यादग्नीन्नाऽऽधातुमिच्छति ॥
यजेत वा न यज्ञेन स याति नरकान्बहून् ।
तस्मात्सर्वप्रयत्नेन ब्राह्मणो वा विशेषतः ॥
आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम्" ।

इत्यादिना । प्रजापतिनाऽपि—

"सर्वसंस्थाधिकारः स्यादाहिताग्नेर्धने सति ।
आदध्यान्निर्धनोऽप्यग्नीन्नित्यं पापभयाद्द्विजः ॥

अतः सिद्धं पापभयाविष्टैः श्रेयोर्थिभिः पूर्वोक्ता यज्ञा इतराणि च कर्माण्यवश्यमनुष्ठानकर्मतां नेयानीति । अथ कथमुच्यते सर्वा अपि संस्थाः पापभीरुभिः श्रेयोर्थिभिरनुष्ठातव्या इति, पाकयज्ञसंस्थादीनां हिंसादिदोषराहित्यात्सात्त्विककर्मत्वेन पापासंपृक्तश्रेयोभिलाषिपुरुषैरनुष्ठानयोग्यत्वेऽपि पशुहिंसादिदोषदूषितानामितरेषां कर्मणां पापजनकानुष्ठानकानां तादृशैः पुरुषैरनुष्ठातुमयोग्यत्वात्, न हि ते यज्ञाः सात्त्विकाः किं तु श्येनयागादिवत्तामसाः, अतस्त आमिषाभिलाषिणामेवानुष्ठानीया न तु सत्त्वप्रकृतीनामपि। न हि परमास्तिकाः सात्त्विकाः संध्यावन्दनादाविव श्येनयागादौ प्रवर्तन्ते यत्कारणं तत्र शत्रुहिंसादिदोषकलुषितत्वं तद्वदेवाग्निष्टोमादीनामपि पशुहिंसादिदोषदुष्टत्वात्तत्रापि सात्त्विकानां प्रवृत्तिरनुचिता हिंसायाः पापजनकत्वाख्यं दुष्टत्वं न हिंस्यात्सर्वभूतानीत्यादिनिषेधशास्त्रतोऽवगम्यते । अत एव गीताशास्त्रेऽष्टादशाध्याये—

' सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् '

इत्यनेन भगवता विहितकर्मणां हिंसादिदोषवत्त्वमभ्युपगम्यैवार्जुनं प्रति परित्यागाभावश्चोदितः । अत एव प्रायश्चित्ताध्याये हेमाद्रौ–

'अजं बस्तं द्विजो हन्यात्कारणेन विना नृप ।
नरकं चानुभूयाऽऽशु ततः सूनुर्भवेत्कलौ ॥
ब्राह्मणो निर्निमित्तेन बस्ताजौ निहनेद्यदि ।
नरकं कालचक्रं तु ह्यनुभूय महत्तरम् ।
पुनः क्ष्मामुपगम्याऽऽशु सूनुर्भवति पूर्वजः " ॥

इति कथितम् । अनयोर्वधे प्रायश्चित्तं तत्रैव निरवर्णि—

"तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ।
विप्रः सङ्गाद्धि तं गत्वाऽनिमित्तैर्यदि हिंसयेत् ।
प्राजापत्यद्वयं कुर्यात्तथा बस्तवधे नृप " ।

इति । अत्र हि अजं बस्तमिति विशिष्योपादानसामर्थ्याद्विज इति कर्तृविशेषोपादानसामर्थ्याद्याग एव स्वतो द्विजकर्तृकहिंसायाः प्रसक्तिसंभवात्प्रायशो यागेऽजबस्तयोरेव द्रव्यत्वेन चोदनाद्यागीयहिंसाया एव दोषजनकत्वं प्रतीयते । अन्यथा नरो हन्याद्यदि पशुमित्येव प्रब्रूयात् । किं च भगवतेश्वरकृष्णेन " दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः । तद्विपरीतः श्रेयान् " इत्यनेनेदमेव प्रत्यपादि । तथा हि रसायनकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्य दुःखस्य निवृत्तेरदर्शनादनैकान्तिकत्वं निवृत्तस्यापि पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वं तद्वदेवाऽऽनुश्रविकस्य कर्मणः । तत्र च प्रतिज्ञायां हेतुमाह–स हीति । ज्योतिष्टोमादिरानुश्रविकः पशुहिंसादिदोषकवलितो भावकार्यत्वादनित्यः परस्परं तरतमभावसंपन्नश्च । नहि ज्योतिष्टोमजन्यस्वर्गो दर्शपूर्णमासजन्यस्वर्गश्चोत्कर्षनिकर्षानापन्नो भवितुमर्हतीति । एवं च ज्योतिष्टोमादिकर्मकलापस्य हिंसादोषरूपाविशुद्धियुक्तत्वहेतुना दुःखानिवृत्तेः साधनाज्ज्योतिष्टोमाद्यपि कर्म हिंसादिना दुष्टमितीश्वरकृष्णोऽभिप्रैति । भगवान्पञ्चशिखाचार्योऽपीममेवार्थमनुमन्यते । तेन हि " स्वल्पः संकरः सपरिहारः सप्रत्यवमर्षः " इत्यभाणि । तस्याप्ययमर्थः–ज्योतिष्टोमादिजन्यधर्मस्य पशुहिंसाजन्याधर्मेणाल्पः संबन्धः पुण्यापेक्षया

पापस्याल्पत्वात्संबन्धे स्वल्पत्वमुपचरितम्, अल्पप्रायश्चित्तपरिहार्यः प्रत्यवायो विद्यत इत्यर्थः। स्वल्पत्वमेवोपपादयति—सपरिहार इति। अल्पेन प्रायश्चित्तेन परिहर्तुं शक्य इत्यर्थः। यद्यालस्यादिना प्रायश्चित्तं नाऽऽचर्यते तदा प्रधानकर्मविपाककालीनपचनयोग्यं पापं तदानीं सहनयोग्यं भवतीति। पतञ्जलिरपि—"कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" इत्यनेन सूत्रेण सोमयागादिकर्मणः शुक्लकृष्णभावमभिप्रेतवान्। वाङ्मनससाध्यं सुखैकफलकं शुक्लं कर्म स्वाध्यायतपआदि दुःखैकफलकं कर्म कृष्णं निषिद्धं सुरापानादि सुखदुःखमिश्रफलकं सोमयागादीति तदीयरामानन्दवृत्तावुक्तत्वाच्च। योगभाष्ये भगवता व्यासेनापि शुक्लकृष्णा बहिःसाधनसाध्या तत्र परपीडानुग्रहद्वारेण कर्माशयप्रचय इत्येवं यागस्याविशुद्धियुक्तत्वमभ्यधायि। सांख्यभाष्यकर्तृविज्ञानभिक्षुणाऽप्ययमेव पक्षोऽङ्गीकृतः। अत एव कर्मणां हिंसादिदोषरूपितत्वान्मुण्डकाद्युपनिषत्सु 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म' इत्यादिना निन्दा श्रूयते। किंच गीताशास्त्रे तृतीयेऽध्याये—

'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव'॥

इत्यर्जुनेन कर्मणां हिंसादिदोषदुष्टत्वादेव घोरत्वरूपं विशेषणं दत्तम्। भाष्यकारेणापि कर्मणि घोरे हिंसालक्षण इति घोरशब्दार्थो व्याख्यातः। मधुसूदनसरस्वत्या कर्मणि घोरे हिंसाद्यनेकायासबहुल इति तच्छब्दो व्यवियत। अत एव 'अहिंसा परमो धर्मः' इति स्मर्यते। तत्र परमत्वरूपविशेषणाद्धिंसादोषयुक्तानामधर्मत्वसमानाधिकरणधर्मत्वं सूच्यते। एवमनेकश्रुतिस्मृतिसमालोचने ज्योतिष्टोमादिकर्मणां हिंसादोषदुष्टत्वात्कथं सात्त्विकैः श्रेयोर्थिभिः सर्वा अपि संस्था अनुष्ठातव्या इति प्रतिज्ञातुं शक्यत इति चेदत्र साधु समादध्मः। हिंसादियुक्ता अपि यज्ञाः केवलं निर्दोषा इत्येवाभ्युपगन्तव्यम्। तत्र हिंसाया अग्नीषोमीयं पशुमालभेत, वायव्यं श्वेतमालभेतेत्यादिना प्रमाणभूतेन शास्त्रेण विशिष्य विहितत्वाद्विधिस्पृष्टे न निषेधावकाश इति न्यायस्य जागरूकत्वात्, अत्र हिंसायुक्तकर्मणो दुष्टत्ववादी देवानांप्रियः प्रष्टव्यः-कथमवगतं भवता हिंसायाः पापजनकत्वं मा हिंस्यात्सर्वभूतानीति निषेधशास्त्रेणावबुद्धमिति चेत्—हन्त यथाऽनेन शास्त्रेण हिंसाया अनिष्टसाधनत्वं प्रतीयते तथैव तत्स-

जातीयेन यागीयहिंसाविधायकशास्त्रेण दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिशास्त्रैः साकमवैरूप्यसिद्ध्यर्थं स्वविधेयेऽनिष्टसाधनत्वास- मानाधिकरणेष्टसाधनत्वं कुतो नाभ्युपगम्यते । ननु दर्शपूर्णमासादि- कर्मणां सामान्यतो निषिद्धत्वाभावात्केवलमिष्टसाधनत्वमभ्युपगम्यते, प्रकृते सामान्यतो निषिद्धत्वादनिष्टसाधनत्वं विहितत्वाच्च क्रतूपकाररूपे- ष्टसाधनत्वं चाभ्युपगम्यत इति चेन्न । प्रकृते निषेधशास्त्रस्य विहितहिंसाति- रिक्तरागप्रयुक्तहिंसामादाय चारितार्थ्यसंभवे विशेषशास्त्रविहितहिंसाया- मितरविधिविधेयसंदृश्यमानानिष्टजनकत्वासामानाधिकरण्यविशिष्टेष्टसा- धनत्वबाधापादकानिष्टसाधनत्वबोधनानौचित्यात् । किंच सामान्य- विशेषस्थले सति विरोध उत्सर्गापवादभाव एवाऽऽश्रयणीयः । यदा- हवनीये जुहोति, पदे जुहोतीत्यादिस्थले तथा दृष्टत्वात् । अन्यथा लोकेऽपि बहुविप्लवापत्तिः स्यात् । न ह्युषःकाले न शयीतेति सामा- न्यतः शयननिषेधकवाक्येन रुग्णस्तूष्णीं सदा शयीतेति वाक्यविहित- रुग्णकर्तृकशयनस्यापि निषेध्यत्वमभ्युपगम्यते । अत्र यद्यद्वक्तव्यं तत्स- र्वमुपरिष्टाद्वक्ष्यामः । यत्तु श्येनादिवदित्युक्तं तदतीवासंगतम् । तत्स्थले शत्रुवधस्य फलत्वेनाभ्युपगम्यमानत्वात्फलस्य च विधेयत्वासंभवाद्विधि- स्पृष्टे न निषेधावकाश इति न्यायाप्रसरात् । अत एव यस्मिन्प्रीतिस्तस्य लिप्सा, इत्यादिसूत्रस्य वर्णकान्तरेऽल्पत्वाद्वा नानेन लक्षणकारणमि- त्यादिना ग्रन्थेन खण्डदेवमिश्रैः फलस्यापि धात्वर्थादिवद्भावनाविशेष- णत्वाविशेषाद्विधेयत्वमिति पूर्वपक्षयित्वा प्रथमतः सकलकारकशिष्ट- भावनाविधानेऽपि अनन्तरं विशेषणविधिकल्पनमन्तरा तस्यापर्यवसा- नात्तद्विषयकविशेषणविध्यकल्पनात्तस्य न विधेयत्वमिति सिद्धान्त- यित्वा पूर्वोत्तरपक्षफलकथनावसरे पूर्वपक्षे श्येनफलीभूतहिंसारूपाभि- चारस्य विहितत्वान्न हिंस्यादिति निषेधाविषयत्वं सिद्धान्ते तस्य राग- प्राप्तत्वान्निषेधविषयत्वमिति प्रत्यपादि । एवं च हिंसाया विहितत्वे निषेधास्पृष्टत्वमविहितत्वे तत्त्वमित्येव खण्डदेवमिश्राशय उन्नीयते । न च हिंसापदस्य मरणानुकूलव्यापारवाचित्वाच्छ्येनस्यापि तत्त्वात्तस्य विहितत्वेऽपि शिष्टानां तत्र निःशङ्कं प्रवृत्त्यविषयत्वेन यथाऽनिष्टसाध- नत्वमुपेयते तथा यागीयहिंसाया अपि विहितत्वेऽपि अनिष्टसाधनताऽ- भ्युपेयतामिति वाच्यम् । यतः साक्षान्मरणानुकूलव्यापारस्यैव हिंसाशब्दार्थत्वं प्रकृते श्येनस्य—अभिचरन्यजेतेतिवाक्यघटकयजि-

धात्वर्थभूतस्य—अभिचरन्निति शतृप्रत्ययान्तशब्देन हिंसारूपाभिचार-फलकत्वावसायात्साक्षान्मरणानुकूलत्वाभावान्न हिंसात्वं न ह्यत्राभि-चाररूपफलस्य वैरिमरणरूपत्वाभ्युपगमाच्छ्येनस्य साक्षात्तदनुकूलव्या-पारत्वेन हिंसात्वमव्याहतमिति संभवति । तथा सति अभिचरन्य-जेतेत्यत्र प्रतीयमानमभिचारस्य यच्छ्येनसमानकर्तृकत्वं तस्यासंग-त्यापत्तेः । अतस्तत्र सामानाधिकरण्यानुसारेणाभिचारस्य मरणानुकूल-विषदानादिव्यापाररूपत्वाभ्युपगमाच्छ्येनस्य हिंसात्वं दुरुपपादमेव । न चात्र भ्रमितव्यं श्येनस्य हिंसात्वाभावेऽपि हिंसानुकूलव्यापाररू-पत्वाव्याघातात्तस्यापि निषिद्धत्वेन श्येनेनाभिचरन्निति विहितत्वेन च यथा—इष्टानिष्टसाधनत्वं तथा यागीयहिंसाया अपि संभवतीति । यतो नहि तत्र श्येनस्यानिष्टसाधनत्वमभ्युपेयते किंतु केवलमिष्टसाधन-त्वमेव श्येनकर्तरि परम्परयोत्पद्यमानस्याभिचारस्यैव तत्र पापजनकत्वं नहि तदपि विधेयम् । अतः परम्परयाऽभिचारोत्पत्तिभियैव शिष्टानां तत्राप्रवृत्तिः । एवं च प्रकृतेऽपि हिंसाया विहितत्वात्तस्य केवलमिष्टसा-धनत्वमेवाभ्युपगन्तव्यम् । किंच गीताशास्त्रेऽपि अशोच्यानितिश्लोकस्य भाष्ये भगवत्पादैः “हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमप्या-शङ्का न कार्या कथं क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसाल-क्षणमत्यन्तक्रूरतरमपि स्वधर्म इति ज्ञात्वा नाधर्माय तदकरणे च ‘ ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि’इति ब्रुवता यावज्जीवादिश्रुति-चोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवति ” इति वर्णितम्—

तथा–‘ नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ’ ॥

इति श्लोकव्याख्यानावसरे मधुसूदनसरस्वतीभिः—ननु दोष-वत्त्वं काम्यस्येव नित्यस्यापि दर्शपूर्णमासज्योतिष्टोमादेर्व्रीहिपश्वादि-हिंसामिश्रितत्वेन सांख्यैरभिहितं न च व्रीहीनवहन्ति अग्नीषोमीयं पशुमालभेतेत्यादिविशेषविधिगोचरत्वात्क्रत्वङ्गहिंसाया न हिंस्यात्सर्व-भूतानीति सामान्यनिषेधस्य तदितरपरत्वमिति सांप्रतम् । भिन्नविष-यत्वेन विधिनिषेधयोरबाधेनैव समावेशसंभवात् । निषेधेन हि पुरु-षस्यानर्थहेतुर्हिंसेत्यभिहितं न त्वक्रत्वर्था सेति, विधिना क्रत्वर्था सेत्यभिहितं न तु अनर्थहेतुर्नेति । तथा च क्रतूपकारकत्वपुरुषानर्थहे-

तुत्वयोरेकत्र संभवात्क्रत्वर्थाऽपि हिंसा निषिद्धैवेति हिंसायुक्तं दर्शपूर्णमासज्योतिष्टोमादि सर्वं दुष्टमेव । विहितस्यापि निषिद्धत्वं निषिद्धस्यापि विहितत्वं श्येनादिवदुपपन्नमेव । अत एव महाभारते—

'जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया हि भूतानां जपयज्ञः प्रवर्तते' ॥

इत्यादिना पूर्वपक्षयित्वा ब्रूमः—न क्रत्वर्थहिंसाऽनर्थहेतुः । विधिस्पृष्टे निषेधानवकाशादित्यादिग्रन्थेन सिद्धान्तितम् । सिद्धान्तग्रन्थस्यायमभिप्रायः—विधिशास्त्रं स्वविषये जनानां प्रवृत्तिसिद्ध्यर्थं विधेये पदार्थे बलवदिष्टसाधनत्वं बोधयति बलवदिष्टसाधनत्वं च विधेयस्यानर्थहेतुत्वेऽनुपपन्नं सदनर्थहेतुभावाभावं चाऽऽक्षिपति । अतो विहितपदार्थे निषेधवाक्यज्ञायमानानर्थहेतुता न युज्यते । यत इष्टे बलवत्त्वस्येष्टोपायानुष्ठानप्रयुक्तसकलदुःखावधिकाधिक्यरूपत्वं निषेधशास्त्रबोधितानिष्टगतबलवत्त्वस्य चेष्टोपायानुष्ठानप्रयुक्तसकलविधेष्टावाधिकाधिक्यरूपता चोपेयते । नहि तत्र केवलेष्टसाधनत्वं विधिवाक्येन बोध्यते केवलानिष्टसाधनत्वं निषेधवाक्येन बोध्यत इति सांप्रतम् । तथा सति विषसंपृक्तान्नभोजनेऽपि प्रवृत्त्यापत्तेः, धूमसहनादिक्लेशजनकयागान्निवृत्त्यापत्तेश्च । इतिकर्तव्यताविधयोऽपि न साक्षात्क्रत्वर्थत्वं बोधयन्ति येन विरोधाभावः शङ्क्येत किंतु बलवदिष्टसाधनत्वमेव । प्रवर्तनाविषयीभूतपुरुषप्रवृत्तेः पुरुषार्थकर्मकत्वस्वाभाव्यात्कांचित्क्रतोरपि पुरुषार्थसाधनत्वेन पुरुषार्थभूयमुपगतस्य तद्विषयतेत्यन्योऽयं विषयः । परं तु बलवदिच्छोपाधानसमये जायमाना पुरुषप्रवृत्तिर्भाव्यस्य नार्थहेतुतामाक्षिपति न वाऽनर्थहेतुतां प्रतिक्षिपति । किं तु यथाप्राप्तमेवावलम्बते । बलवदिच्छाविषय स्वर्गादौ स्वत एव प्रवृत्तिसंभवात्तत्र विध्यपेक्षाभावात् । अत एव श्येनदृष्टान्तवैषम्यम् । तत्रापि परम्परया श्येनकर्तृनिष्ठरयाभिचाररूपफलस्य बलवदिच्छाविषयत्वेन विधिजन्यप्रवृत्तिविषयत्वाभावात् । श्येनकर्तुरभिचारप्रयुक्तानर्थहेतुत्वसंभवात्तत्स्थले श्येनयागस्य विधिजन्यप्रवृत्तिविषयत्वेनानर्थहेतुत्वानभ्युपगमात् । एवं च हिंसानिषेधसामान्यशास्त्रं विशेषविधिवाधितं सद्रागद्वेषादिमूलकाक्रत्वर्थहिंसां विषयी करोतीत्येवाभ्युपगन्तव्यम् । विधिरपृष्टस्यापि निषेधविषयत्वेऽतिरात्रग्रहणस्यापि नातिरात्रे षोडशिनं गृह्णातीत्यनेन निषिद्धत्वादनर्थहेतुत्वापत्तिः । अयं तु भट्टस्याभिप्रायः । प्रभाकरस्तु श्येन-

ज्योतिष्टोमादियागहिंसयोरन्यथावैषम्यमुपपादयामास । साक्षात्पुरुषार्थसाधने नियोगेन न प्रवृत्तिः किं तु रागत एव। एवं च श्येनयागस्येतिकर्तव्यतात्वाभावात्तस्य रागप्रयुक्तप्रवृत्तिविषयत्वान्मरणप्रयोजनकव्यापारत्वेनाऽऽपतितमनर्थहेतुत्वं न शक्यप्रतिक्षेपम । यागीयहिंसायाः सर्वत्रेतिकर्तव्यतात्वात्तत्र प्रवृत्तेर्वैधत्वाद्विधिना हिंसायामनर्थहेतुता निवर्त्यत इति श्येनयागीयहिंसयोर्वैषम्यमिति यथा तथा वा भवतु मतद्वयेऽपि यागीयहिंसाया अनिष्टसाधनत्वं नास्तीति सिद्धम् । मतद्वय इयान्विशेषः—भट्टमते श्येनस्य केवलधर्मत्वाच्चोदनालक्षणोऽर्थो धर्म इत्यत्रार्थपदव्यावर्त्यं कलञ्जभक्षणादिकमेव, प्राभाकरमते तस्याधर्मत्वात्सोऽपि तेन व्यावर्त्य इत्यलमधिकेन । तार्किकैरपि कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वेष्टसाधनत्वानां त्रयाणां विध्यर्थत्वं सर्वत्राभ्युपगम्य क्रत्वर्थहिंसायामपि विशिष्य निषेधाभावात्प्रायश्चित्तानुपदेशाच्च त्रयाणामपि भानमावश्यकमित्युच्यते । अत एव व्युत्पत्तिवादान्ते गदाधरभट्टाचार्यैः—यत्तु दीक्षाङ्गपशुघातस्य नरकासाधनतया मा हिंस्यादित्यत्रावैधहिंसैव विवक्षितेति श्येनस्य नरकासाधनत्वोपपादनं तदपि न, तावताऽपि अभिचारविधया तथात्वस्य दुर्वारत्वादिति लिखितम् । तत्र यत्तुकारमते सिद्धान्तमते च यागीयहिंसाया अनिष्टासाधनत्वेन मा हिंस्यादित्यस्य विहितहिंसातिरिक्तहिंसापरत्वमभिमतमेव परं तु श्येनस्य यत्तुकारमते नरकासाधनत्वं संमतं सिद्धान्तेऽभिचारत्वेन नरकसाधनत्वं तच्च मीमांसकानामपि संमतमेव । औपनिषदानामपि भाट्टदर्शनमेव व्यवहारार्थमुपयोगि । अत एव हिंसादिदोषदुष्टत्वेन कर्मपरित्यागकथनस्थले भगवता 'मोहात्तस्य परित्यागस्तामसः परिकीर्तितः' इत्यत्र कर्मपरित्यागहेतुत्वेन मोहो वर्णितः। तत्रत्यमोहपदं मधुसूदनसरस्वतीभिरित्थं व्याख्यायि । तथा च सांख्यानां विहिते निषिद्धत्वज्ञानमनर्थाहेतावनर्थहेतुत्वज्ञानं धर्मे चाधर्मत्वज्ञानमनुष्ठेये चाननुष्ठेयत्वज्ञानं विपर्यासरूपो मोह इति । एवं चैतादृशज्ञानप्रयोज्यकर्मपरित्यागस्य तामसत्वं भगवतः कृष्णस्याभिप्रेतमिति सिद्धम् । यदप्युक्तम् 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्' इत्यन्ताग्निष्टोमादिकर्मणां दोषवत्त्वमभ्युपगम्यैव त्यागाभावः कीर्तित इति तदप्यपेशलम् । तत्रापिशब्देन वस्तुतो दोषाभावः सूचित एव स्थूलबुद्धिमनुसृत्य भगवता तथाऽभ्युपगम्य कथितत्वात् । अयमभिप्रायो ब्रह्मानन्दगिरौ व्यक्तः । यद्वादि प्रायश्चित्ताध्याये हेमाद्रौ—

अजं वस्तं द्विजो हन्यात्कारणेन विना नृप ।
नरकं चानुभूयाऽऽशु ततः सूनुर्भवेत्कलौ ॥

इत्यादि । तदतितुच्छम् । तत्रैव श्लोके कारणेन विनेत्युक्तत्वात् । अत्र च यागादौ हिंसाविधायकशास्त्रमेव कारणत्वेनाभिप्रेतमन्यथा तस्मिन्नेव हेमाद्रावेतत्पद्यलेखनोपरि—

'यज्ञार्थं हन्ति चेद्विप्रो ह्यनन्तं फलमश्नुते ॥
यज्ञार्थं हन्ति यो विप्रो ह्यजं मेषं सुपुण्यधीः ।
स याति ब्रह्मणः स्थानं पुनरावृत्तिदुर्लभम् ॥
यागार्थं हन्ति यो विप्रः पशुं लोकपरायणः ।
स याति ब्रह्मसदनं ब्रह्मणा सह मुच्यते ॥
वस्तं वाऽपि हनेद्यस्तु स यातीन्द्रपदं ध्रुवम् ।
यागार्थहिंसनं प्रोक्तं तयोर्ब्रह्मविसृष्टयोः' ॥

इत्यादीनि लैङ्गगाङ्गकाण्डकौर्मवचनानि व्याहतप्रामाण्यकानि भवेयुः । एषु पद्येषु यागीयहिंसाया निर्दुष्टत्वस्य स्फुटं प्रतीयमानत्वात् । एवं च—

विप्रः सङ्गाद्धितं हित्वाऽनिमित्तैर्यदि हिंसयेत् ।
प्राजापत्यद्वयं कुर्यात्तथा वस्तवधे नृप ॥

इत्यादिप्रायश्चित्तवचनं विहितहिंसातिरिक्तहिंसाविषयकमेव पूर्वलिखितानिरवकाशवचनबलादत्रापि सङ्गादनिमित्तैरिति कथितत्वाच्च । यदत्र हि अजं वस्तमिति विशिष्य विप्र इति च विशिष्योपादानसामर्थ्यात्, इत्यादि कथितं तदपि अस्माकमेव साधकम् । यतो यागे द्विजैः प्रायशोऽजवस्तयोर्हिंसनेऽपि शिष्टगर्हितत्वादर्शनाद्यागाद्बहिरपि तत्कर्तृकतद्धिंसाया दोषविधुरत्वं स्यादिति मन्दमतीनामाशङ्का संजायेत तन्निवारणार्थं विशिष्य तथाऽकथि । यदवाचि कापिलपातञ्जलमतानुयायिभिरीश्वरकृष्णप्रभृतिभिः—यागीयहिंसाया अल्पदोषदुष्टत्वं वर्णितमिति, तत्तु अतीवासमीचीनम् । तैश्च केवलं स्वोत्प्रेक्षितमोक्षरूपफलोपायत्वेनाभिमतस्य प्रकृतिपुरुषविवेचनस्य सिद्धये शास्त्राणां प्रणीतत्वेन मुण्डकाद्युपनिषत्सु विधीयमानस्य ब्रह्मज्ञानस्य प्रशंसासिद्धये प्लवा ह्येते अदृढा यज्ञरूपा इत्यादिना कर्मणां निन्दितत्वेऽपि न हि निन्दा निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमितिन्यायेन तत्र तात्पर्याभाववत्ता-

दृशशास्त्रपरमतात्पर्यविषयीभूतप्रकृतिपुरुषविवेचनात्मकोपायस्य प्राश-स्त्यसिद्धये तदितरेषां निन्दाकथनावसरे कर्मणामल्पदोषदुष्टत्वेन निन्दितत्वात्तत्र तात्पर्याभावस्योन्नेयत्वात्। यदि च कपिलपतञ्जलि-प्रभृतीनां हिंसादिदोषदुष्टत्वेन यागानां वस्तुतोऽनिष्टसाधनत्वमेवाभिमत-मिति मन्यते तदाऽपि पूर्वोक्तयुक्त्याऽपौरुषेयनिर्दोषहिंसाविधायकश्रुती-नामनर्थहेतुत्वाभावबोधकत्वावश्यंभावात्तादृशश्रुतितन्मूलकबहुस्मृतीवि-रोधादप्रतिष्ठादोषदूषितोत्प्रेक्षामात्रमूलककापिलपातञ्जलादिस्मृतीनां श्रु-तितात्पर्यानवबोधमात्रनिबन्धनानां श्रुतिविरुद्धद्वैतांश इवैतदंशेऽपि अप्रा-माण्यमेवावश्यमभ्युपेयम्। अत एवादृढा ह्येत इत्यादिना कर्मनिन्दोक्ति-रपि संगच्छत इत्युक्तिः परास्ता। तत्रापि ज्ञानप्रशंसार्थमेव कर्मनिन्दा-या उक्तत्वेन तत्र श्रुतेस्तात्पर्याभावात्। यदपि गीताशास्त्रे तृतीयाध्याये—

'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव'॥

इत्यस्मिन्श्लोकेऽर्जुनेन वस्तुतो हिंसादिदोषदुष्टत्वाभिप्रायेण घोर-त्वविशेषणं दत्तमिति व्याहृतं तदपि अज्ञानमूलकमेव। यतस्तत्रार्जुनेन वस्तुतो हिंसादिदोषदुष्टत्वेन न घोरत्वविशेषणमदायि अपि तु शास्त्रब-हिर्भूतानां प्राकृतानामापातबुद्धिमनुसृत्य तथा कथितम्। तादृशविशेषणं च तदानीं देयमेव यतोऽर्जुनेन स्वस्य केवलकर्मयोगे प्रवर्तकं कृष्णं प्रति उपालम्भस्य कथ्यमानत्वात्। एतदवसरे च ज्ञानयोगापेक्षया येन येन प्रकारेण कर्मयोगस्य निकर्षो भवति तत्सर्वं वक्तव्यम्। तस्मात्सर्वथा यागीयहिंसानिर्दोषतामतस्यैवापौरुषेयदोषशङ्कानास्कन्दितश्रुतिस्मृति-न्यायसहस्रसिद्धत्वाद्यागीयहिंसादुष्टत्ववादो दृढतरमूलावलम्बाभावाद-व्यवस्थितोत्प्रेक्षामूलकत्वाच्च सिकताकूपवद्विशीर्यमाणत्वेन श्रेयोर्थिभिः सर्वथाऽनादरणीय इति सिद्धम्। अधुनातनाः केचन वावदूका दुर्वास-नावासितान्तःकरणाः पूर्वोपपादितप्रमाणान्यनालोचयन्तो दूरीकृतानादि-श्रुतिस्मृतिसिद्धवर्णाश्रममर्यादा आब्राह्मणमाम्लेच्छादाहारादिव्यवहारेषु समतां भावयन्त आस्तिकमूढानन्यांश्च केवलशास्त्राधीतिन इहैव येन के-नापि प्रकारेण प्रतिष्ठाकामा जनान्बहुधाऽऽवर्जयन्तोऽनादिनिर्दोषश्रुति-तदनुमतस्मृतिविरुद्धाप्रतिष्ठिततर्कप्रकल्पितकापिलपातञ्जलादिस्मृतिमूल-कान्वैयाकरणसिद्धान्तलघुमञ्जूषादिग्रन्थांस्तैरतैर्निखिलागमेषु निष्णा-तमात्मानं मन्यमानैः प्रणीतान्वेदवत्प्रमाणयन्त इदानीं हिंसायुक्ता यागा

नानुष्ठातुमर्हाः श्येनादिवत्तामसा हि ते । अतो हिंसादिरहिताः सात्त्विकाः पाकयज्ञादयः परं कर्तुं युक्ता इत्यादिकमात्मनि सर्वशास्त्राभिज्ञत्वाभिमानेन मुधा जाजल्यमाना महाप्रामाणिकपरम्परागतां वस्तुतो निःश्रेयसकरीमग्निष्टोमादिधर्मजातानुष्ठितिं प्रतिबन्द्धुं संबद्धसंनाहा अश्राव्यन्ते । तेषां मिथ्याभिमानं समूलकाषं कषितुं किंचिदिवात्र लेखनव्यापारेऽधिकृता भवामः । यदलेखि मञ्जूषायां लिङर्थविचारावसरे तत्सर्वमाभासयितुमिदानीं प्रयत्यते । यत्तु न हिंस्यात्सर्वभूतानीति निषेधाद्यागीयपश्वालम्भे पापं संभवत्येव । न चाग्नीषोमीयं पशुमालभेतेत्यादिर्यागीयहिंसाविधिर्निषेधस्य विहितेतरहिंसापरत्वं बोधयतीति वाच्यम् । विधिना प्रकरणेन च तस्याऽऽक्रमणाविषयत्वेनेष्टहेतुत्वक्रत्वर्थत्वबोधनेऽपि उक्तरीत्याऽनिष्टाहेतुत्वबोधे मानाभावेन निषेधस्य हिंसायां पुरुषानिष्टहेतुत्वबोधकत्वेन विरोधाभावात्परकीयसुन्दरीगमनादौ समावेशदर्शनादिति तत्सामान्यविशेषशास्त्रविशेषानभिज्ञतां ग्रन्थकर्तुर्व्यक्तमावेदयति । यतो यागीयहिंसाविधायकानामग्नीषोमीयं पशुमालभेत, वायव्यं श्वेतमालभेत, पशुं संज्ञपयति, पशुं विशास्ति, इत्यादिश्रुतीनां जागरूकत्वेनावस्थितिः । न हिंस्यात्सर्वभूतानीति सामान्यवाक्यादेतादृशविशेषवाक्यापर्यालोचनदोषप्रयुक्तवैधावैधहिंसाप्रतियोगिकनिषेधाविषयकभ्रमोत्पत्तावपि एतादृशवाक्यपर्यालोचनानन्तरं वैधहिंसाप्रतियोगिकत्वांश उत्पन्नज्ञानस्य भ्रमत्वनिश्चयात्तद्वाक्यं केवलमवैधहिंसाप्रतियोगिकनिषेधपरं पर्यवस्यति । एवं च क्रत्वर्थहिंसाया निषेधप्रतियोगित्वेन शास्त्रजन्यप्रमाविषयत्वाभावात्कथंकारं दुष्टत्वमापद्येत । एवं स्थितेऽपि यदि हठान्न हिंस्यादित्यत्र सकलहिंसानां निषेधोऽभ्युपगम्यते तर्हि निर्विषयतया विधिवाक्यमरण्यरुदितप्रायमापद्येत हृदयावदानराहित्येन क्रतोरनिर्वृत्त्यापत्तिश्च । न च वाच्यमेतद्दोषद्वयमपि नाऽऽपतति विधिना कत्विष्टसाधनत्वस्य निषेधेन तदनिष्टसाधनत्वस्य बोधयितुं शक्यत्वात् । न चैकत्रेष्टसाधनत्वानिष्टसाधनत्वे न संभवतः । घृतपाने पुष्ट्याख्येष्टसाधनत्वमेहरोगाख्यानिष्टसाधनत्वयोः समावेशदर्शनात् । यागादौ च स्वर्गादिरूपेष्टसाधनत्वस्य धूमसहनादिरूपतात्कालिकानिष्टसाधनत्वस्य च संकरस्य सर्वसंप्रतिपन्नत्वात् । निषेधशास्त्राणां हि—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इत्यभियुक्तोक्त्या विधीनां प्रवर्तकत्वेनेव निवर्तकत्वेनैव शास्त्रत्वस्य समर्थनीयत्वात् । प्रकृते निवर्तकत्वासंभवे शास्त्रत्वाभावप्रसङ्गात् । न च शङ्कनीयं पशुहिंसा यागनिर्वृत्त्यर्थं कार्या, आहोस्वित्प्रत्यवायपरिहारार्थं परिहर्तव्येति विकल्पापादकत्वेन पाक्षिकनिवर्तकत्वं संभवतीति । यत एवंचेन्निषेधशास्त्रं यागीयहिंसांशे पक्षे निषेधकमवैधहिंसांशे नित्यं निषेधकमिति वैरूप्यदोषग्रस्तं वैधहिंसाननुष्ठानपक्षे क्रत्वनिर्वृत्तिदोषपराहतं च भवेत् । किं च मधुविषसंपृक्तान्नसाधारण्येन केवलेष्टसाधनत्वस्य प्रवृत्त्यौपयिकत्वाभावादिष्टोपायानुष्ठानप्रयुक्तसर्वविधानिष्टावधिकाधिक्यरूपबलवत्त्वविशिष्टेष्टसाधनत्वस्यैव प्रवृत्तिप्रयोजकत्वात्केवलानिष्टसाधनत्वस्य तात्कालिकक्लेशकरभिन्नयागादिसाधारण्यापत्त्या निवृत्तिप्रयोजकत्वासंभवेनेष्टोपायानुष्ठानसाध्योद्देश्यभूतेष्टावधिकाधिक्यरूपबलवत्त्वविशिष्टानिष्टसाधनत्वस्यैव निवर्तकत्वावश्यंभावात् । यागीयहिंसाया निषेधविषयत्वाभ्युपगम एकस्मिन्हिंसापदार्थे एतादृशयोरिष्टानिष्टसाधनत्वयोः समावेशासंभवेन प्रवर्तकनिवर्तकयोर्विधिनिषेधशास्त्रयोः क्रत्वर्थहिंसायां तादृशेष्टानिष्टसाधनत्वबोधकता व्याहन्येतेति यागीयहिंसाया निषेधाविषयत्वमवश्यमभ्युपगन्तव्यमिति कुतस्तस्याः पापजनकत्वम् । न च निषेधशास्त्राणां कण्डन्यादिपञ्चसूनानान्तरीयकप्राणिहिंसांशे निवर्तकत्वासंभवात्तत्र तादृशप्राणिवधनिमित्तकपञ्चमहायज्ञात्मकप्रायश्चित्तेषु प्रवर्तकत्वेनैव तदंशे शास्त्रत्वस्य समर्थनीयत्वात्तेषां निवर्तकत्वेनव शास्त्रत्वमिति नियमस्य व्यभिचरितत्वाद्यागीयहिंसांशेऽपि तद्वत्तन्निमित्तकप्रायश्चित्ते प्रवर्तकत्वेनैव शास्त्रत्वस्य समर्थयितुं शक्यत्वाद्विधिनिषेधयोः प्रवर्तकत्वनिवर्तकत्वव्याघाताभावात्क्रत्वनिर्वृत्तिदोषप्रसङ्गस्याप्यभावाद्बलवत्त्वस्यैकविधस्य वक्तुमशक्यत्वाद्जीर्णतापादकाधिकान्नभोजनगतप्रवृत्तिप्रयोजकबलवदिष्टसाधनत्वाविरोधानापादकस्वपरिहारोपायप्रवृत्त्यौपयिकबलवदनिष्टसाधनत्ववत्प्रकृतेऽपि स्वपरिहारोपायप्रवृत्तिप्रयोजकबलवदनिष्टसाधनत्वस्याभ्युपगम्यमानत्वाद्विहितपशुहिंसाया निषेधविषयत्वेऽपि न किंचिद्बाधकमिति वाच्यम् । निषेधशास्त्राणां निवर्तकत्वेन शास्त्रत्वस्योत्सर्गसिद्धत्वादबुद्धिपूर्विकायाः ( प्रामादिकायाः ) पञ्चसूनानान्तरीयकहिंसाया निवर्त-

नस्याशक्यत्वात्तदंशे निवर्तकत्वं परित्यज्य तत्परिहारोपायपञ्चमहायज्ञप्रवृत्तिप्रयोजकत्वेन शास्त्रत्वस्य समर्थनीयत्वात्पूर्वोक्तव्याघातपरिहारासंभवाद्यागीयहिंसाया निषेधाविषयत्वमेवाभ्युपगन्तव्यमिति कुतोऽनिष्टजनकता । न च निषेधशास्त्राणां बुद्धिपूर्वकान्निषिध्यमानान्निवर्तकत्वोत्सर्गस्यापि बुद्धिपूर्वकशास्त्रनिषिद्धविहितवर्णिवधपरिहारार्थानृतवदने तत्परिहारोपायसारस्वतचर्वात्मकप्रायश्चित्तप्रवृत्तिप्रयोजकत्वेन शास्त्रत्वसमर्थनवन्निषेधशास्त्राणां निषेध्यसमर्पकशब्दसमर्पितयावदर्थबोधकत्वरूपोत्सर्गत्यागस्य विना कारणं कर्तुमशक्यत्वाद्विहितस्य निषेधाविषयत्वे न किंचिद्बाधकमिति वाच्यम् । यतः सर्वस्वारकर्तृकत्वङ्गात्मव्यापादनमरणान्तप्रायश्चित्तांशयोर्भूतेन पश्चात्तत्परिहारोपायप्रायश्चित्तस्य कर्तुमशक्यत्वात्तत्प्रवृत्तिप्रयोजकत्वेनापि निषेधशास्त्राणां शास्त्रत्वसमर्थनासंभवान्निवर्तकत्वेन तत्समर्थने तादृशात्मव्यापादनमरणान्तप्रायश्चित्तयोः प्रवृत्तयोर्निषेधशास्त्राविषयत्वसिद्ध्यर्थं निषेधशास्त्राणां निषेध्यपरशब्दप्रतिपाद्ययावदर्थनिषेधबोधकत्वोत्सर्गपरित्यागस्याऽऽवश्यकत्वाद्यागीयहिंसारूपांशान्तरेऽपि तत्त्यागस्यौचित्यादधुना निषेधानां स्वनिषेध्यसर्वांशेऽपि निवर्तकत्वेनैव शास्त्रत्वसंभवरूपलाभाद्यागीयहिंसाया निषेधाविषयत्वेन कुतो दुरितजनकता । न च हिंसानिषेधशास्त्रात्प्रथमतो हिंसासामान्यस्य निषेध्यत्वप्रतीतौ पश्चात्सर्वस्वाराङ्गात्मव्यापादनमरणान्तप्रायश्चित्तयोः प्रवर्तकत्वेन निवर्तकत्वेन वा चारितार्थ्यस्य वक्तुमशक्यत्वादगत्या तन्मात्रस्य निषेध्यत्वत्यागेऽपि यागीयहिंसायां स्वपरिहारोपायप्रायश्चित्तप्रवर्तकत्वेन निषेधशास्त्रस्य चारितार्थ्यसंभवेन तदंशस्य निषेधविषयत्वपरित्यागानौचित्यात्तद्दृष्टान्तसत्त्वमात्रेण तत्परित्यागस्याऽऽश्रयणेऽग्निदक्षिणारूपवत्सेऽतिदेशप्राप्तानामन्वाहार्यसंबन्धिनां धर्माणां मध्ये पतितस्य पाकस्य दक्षिणारूपवत्सनाशप्रसङ्गभिया परित्यागावश्यकत्वेन तद्दृष्टान्तमहिम्नेतरेषां धर्माणामपि परित्यागप्रसङ्गापत्त्या, असंभवात्क्रत्वर्थहिंसाया अपि निषेधविषयत्वेनानिष्टसाधनत्वमस्त्येवेति वाच्यम् । यतो दृष्टान्तसद्भावमात्रेणातिप्रसङ्गापत्त्या निषेध्यकोटिबहिर्भावासंभवेऽपि मरणान्तप्रायश्चित्तसर्वस्वारक्रत्वङ्गात्मव्यापादनाहवाभिमुखशत्रुहननोचितदण्डरूपचोरहननादीनां बहूनां हननानामवश्यं निषेध्यकोटितो व्यावर्तनीयानां व्यावर्तनार्थं तत्तद्व्यक्तिभिन्नत्वरूपबहुविशेषणोपादाने लाघवाद्दातव्येन वध्यानुग्रहपर्यव-

सायिभिन्नत्वरूपविशेषणेन यागीयहिंसाया अपि व्यावृत्तिसंभवादा-ततायिब्राह्मणहननगर्भिणीभूतमल्हाहनननान्तरीयकगर्भहननयोर्निषेध्य-कोटितो व्यावर्तनार्थमनुपदिष्टवैशेषिकप्रायश्चित्तकत्वविशिष्टविध्यनुज्ञात-त्वरूपस्यानुगतरूपस्य निषेध्यविशेषणत्वेनोपादानेऽपि तेनापि यागीय-हिंसाया निषेध्यकोटितो व्यावृत्तिसंभवात्क्रत्वर्थहिंसाया निषेधा-विषयत्वेन न पापजनकत्वम् । तस्माद्यथा यदाहवनीये जुहोतीत्याहवनीयरूपहोमाधिकरणविधिवाक्ये जुहोतिधातोः, अश्वस्य पदे पदे जुहोति आग्रश्वने जुहोतीत्यादिवाक्यावेदिताधिकर-णान्तरावरुद्धहोमातिरिक्तहोमविषयत्वमभ्युपगम्यते तथैवेहापि विहित-हिंसातिरिक्तहिंसाविषयकत्वं निषेधशास्त्रस्याभ्युपगन्तव्यमित्यलमति-विस्तरेण । परकीयसुन्दरीदृष्टान्तोऽप्यसंगतः । यागीयहिंसादौ विधिशास्त्रेण पूर्वोक्तरीत्या बलवदिष्टसाधनत्वस्य बोधनान्नि-षिद्धत्वेन बलवदनिष्टसाधनत्वस्यापि वक्तव्यत्वादुभयोरपि शास्त्र-त्वादुभयत्रापि वस्तुतो बलवत्त्वस्याभ्युपगन्तव्यत्वादेकत्र भ्रम इति वक्तुमशक्यत्वात्परकीयसुन्दरीगमने च केवलं निषिद्धत्वाद्वस्तुतो बलवदनिष्टसाधनत्वस्यैवाभ्युपगमाद्विहितत्वाभावेनेष्टांशे बलवत्त्वभ्र-मेणापि उत्कटरागवतः प्रवृत्तेः संभवाद्वस्तुतो बलवत्त्वस्यानपेक्षणा-दुभयोर्वैषम्यात् । यत्तु किंचाऽऽलम्भनमत्र स्पर्शः, अग्निहोत्रप्रकरण-पठिते वत्समालभेतेतिवाक्ये तदर्थकत्वनिर्णयात् । हिंसा तु अङ्ग्याग-विशसनप्रकारोपदेशाभ्यामाक्षेपलभ्या । एवं चाऽऽक्षेपलभ्यार्थेन विरो-धेऽपि वेदस्याप्रामाण्यप्रसक्त्यभावेन तत्संकोचे न मानम् । अन्य-तराप्रामाण्यभीत्या हि संकोचः पापसत्त्वेऽपि तद्दोषसहिष्णोरेव रागव-शीकृतस्य श्येनादाविव ज्योतिष्टोमादावपि प्रवृत्तिरुपपद्यते । एतेन तक्र-कौण्डिन्यन्यायेनाविरोधेऽपि निषेधस्य विहितेतरहिंसापरत्वं विशेषवि-धिना बोध्यत इत्यपास्तम् । हिंसाविधेरभावात् । न च निषेधस्य पुरु-षार्थत्वेन यदर्थो निषेधस्तदर्थमेव निषेध्यमिति नियमेन पुरुषार्थहिं-साया एव स निषेध इति वाच्यम् । पुरुषार्थस्याभ्युपगमादिनिषेधस्य क्रत्वर्थत्वदर्शनेन त्वदुक्तनियमस्य व्यभिचारितत्वात् । क्रत्वर्थहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थत्वाच्चेति तत्तु अनाघ्रातमी-मांसाकुसुमगन्धत्वमविदितवेदवाक्यार्थत्वं चाऽऽत्मनः प्रख्यापयति । तथा हि तत्रभवान्माङ्गभट्यः प्रष्टव्यः—अग्नीषोमीयवाक्य आलभतेः केव-

लम्पशार्थैकत्वमभ्युपगम्य यागविध्यनङ्गीकारे केन वाक्येन पुनरग्नीषोमीययागविधिरतादृशं वाक्यं स्पष्टं वक्तव्यं खलु। किं च हिंसा, अङ्गयागाविशसनप्रकारोपदेशाभ्यामाक्षिप्यत इत्युक्तेः कोऽर्थः । अङ्गयागेष्वत्राङ्गभूताश्च ते यागाश्चाङ्गयागा इत्यर्थः, आहोस्विदङ्गानां हृदयादीनां यागा इत्यर्थो वा। पक्षद्वयेऽपि तद्विधायकं वाक्यं किम् । किं च विशसनस्य प्रकार इत्यस्य किमभिप्रेयते—न हि क्रमादिरूपः प्रकारो वर्णयितुं शक्यते तादृशप्रकारस्याविहितत्वात् । यथासांकर्यं विशसनस्य कर्तुं योग्यत्वात् । किं च हिंसाऽऽक्षेपलभ्येति वदता देवानांप्रियेण हिंसायाः प्रत्यक्षवाक्यविहितत्वाभावेऽभिप्रेते पशुं संज्ञपयति पशुं विशास्तीत्यादिप्रत्यक्षसंस्कारविधीनां कोऽर्थोऽभिप्रेयते । किं च श्रुतार्थापत्त्या प्रमितेनार्थेन विरोधेऽपि वेदस्य नाप्रामाण्यप्रसक्तिरिति वदितुर्हिंसा रागप्राप्तसमानेत्यभिप्रेतं वा । तथा सति सर्वत्रार्थापत्तिकल्पितवाक्यविहितानां पदार्थानामप्रामाणिकत्वमित्युक्तं स्यात् । एवं सति बहुविप्लवो भवेत् । न हि कश्चित्सोमेन यजेतेत्यादिविधिस्थल आर्थिकविशेषणविधिप्रमितार्थस्यावैदिकत्वमभ्युपैति । किं चाग्नीषोमीयवाक्ये यागविध्यनङ्गीकारे पशुसोमाधिकरणविरोधः । द्रव्यसंयोगाच्चोदनापशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोग इत्यधिकरणे यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति प्रकृत्य श्रूयमाणानि हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इत्यादिवाक्यान्युदाहृत्य किमग्नीषोमीयवाक्यं हृदयादिवाक्यविहितयागसमुदायानुवादकमाहोस्विद्द्रव्यदेवताविशिष्टयागान्तरविधायकं हृदयादिवाक्यानि चैतद्वाक्यविहितद्रव्यसंस्कारविधायकानि, इति संदिह्य पूर्वाधिकरणे दध्यादिवाक्यानां गुणमात्रविधानेन तृतीयविधिप्रकारसंभवे पञ्चमविधिप्रकाराश्रयणस्यान्याय्यत्वात् । अग्निहोत्रं जुहोतीत्यत्र धात्वर्थमात्रविधानसंभवादग्निहोत्रवाक्ये होमविधित्वस्य दध्यादिवाक्ये गुणमात्रविधित्वस्य चाङ्गीकारेऽपि प्रकृतेऽग्नीषोमीयवाक्य आद्यविधिप्रकारस्यासंभवात्पञ्चमविधिप्रकारस्यैवाऽऽश्रयणीयत्वादुत्पत्तिवाक्यविहितपश्ववरुद्धे यागे हृदयादीनां साधनत्वानुपपत्तेर्हृदयादिवाक्ये हृदयाद्युद्देशेनावदानसंस्कारविधानासंभवाद्यागविधिसिद्ध्यर्थमेव हृदयादिवाक्यैः प्राकृतावदानभिन्नावदानान्तराणां विधानाद् विहितानां तेषां पशुप्रभवद्रव्यवृत्त्यवदानत्वसादृश्येन सांनाय्यावदानप्रकृतिकत्वावसायात्प्रकृतिभूतावदानगतयागीयद्रव्यवृत्तित्वस्य विकृतिभूतेऽस्मिन्नवदाने

ज्ञानसंभवाद्धृदयादीनां यागसाधनद्रव्यसंस्कारसंस्कृतत्वहेतुना पूतीकवद्यागसाधनत्वानुमानात्तदन्यथानुपपत्त्या यावद्धृदयादियागान्विधाय तांश्चाऽऽलभतिना लक्षणयाऽनूद्याग्नीषोमीयवाक्येनाग्नीषोमदेवतामात्रविधानं, पशुपदं च छागस्य वपाया मेदस इति मन्त्रवर्णाद्धृदयादीनां छागप्रकृतिकत्वस्य प्राप्तत्वाल्लक्षणया। परं यागसाधनद्रव्यवृत्तित्वस्य सांनाय्यावदानानङ्गत्वात्तस्य प्रकृतावदानेऽतिदेशतः प्राप्त्यसंभवेन हृदयादीनां यागसाधनत्वानुमानासंभवादुक्तप्रकारासंभवेऽपि हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शानग्नीषोमीयवाक्यगतालभतिना शक्त्याऽनूद्य पशुपदेन हृदयादींल्लक्षयित्वा तेषां प्रत्येकं देवतासंबन्धस्य करणात्तादृशद्रव्यदेवतासंबन्धान्यथानुपपत्त्या कल्पितानां तावतां यागानामनेनैव वाक्येन विधानं पशुपदं सर्वथाऽनुवाद इति पूर्वपक्षयित्वा पक्षद्वयेऽपि पशुपदस्य पशुत्वावच्छिन्ने शक्तस्य हृदयादिषु लक्षणाया आवश्यकत्वात्तस्याश्चागतिकगतित्वात् । तद्दोषपरिहारार्थं पञ्चमविधिप्रकाराश्रयणेनापि अग्नीषोमीयवाक्यस्य एव विशिष्टविधिमङ्गीकृत्य हृदयादिवाक्यैश्च हृदयादीनां संस्कारमात्रविधानं यद्यपि हृदयादीनामुत्पत्तिशिष्टपशुद्रव्यावरुद्धे यागे साधनत्वं न संभवतीति तदुद्देशेन संस्कारविधानं न संभवतीत्येवं दोषं पूर्वपक्षिणं प्रत्युक्तमथाऽपि विशसनावदानादिविधितात्पर्यग्राहकानुरोधेनाग्नीषोमीयवाक्ये पशुद्रव्यस्य हृदयादिप्रकृतित्वेनैव विधानम् । एवं च हृदयादीनां साक्षाद्विधिना यागकरणत्वसंभवात्तदुद्देशेन संस्कारविधिरुपपन्न एव । एवं च पूर्वपक्षे सिद्धान्ते चाग्नीषोमीयवाक्ये यागविधेः सत्त्वात्तदनभ्युपगम्य केवलं वत्समालभेतेत्यत्रेव स्पर्शपरत्वाभ्युपगमोऽज्ञानमूलक आग्रहमूलको वा स्यात् । वत्समालभेतेत्यत्र द्रव्यदेवतासंबन्धबोधकतद्धिताभावाद्यागविधानासंभवेनाग्निहोत्राङ्गदोहनोपयोगिवत्ससंस्कारकत्वेन स्पर्शस्य विधानं प्रकृते तादृशतद्धितो वर्तत इति यागविधिरेवेति विषमोऽयं दृष्टान्तः । अग्नीषोमीयप्रधानवाक्यैकवाक्यतापन्नस्य पशुं संज्ञपयतीत्यादिहिंसाबोधकाङ्गवाक्यजातस्य सत्त्वाद्धिंसाऽऽक्षेपलभ्यैवेति प्रतिज्ञोन्मत्तप्रतिज्ञासमैव । यागीयहिंसायाः श्येनस्य च वैषम्यस्य पूर्वं बहुधा प्रदर्शितत्वात्तद्दृष्टान्तावलम्बनं चायुक्तम् । एवं च प्रत्यक्षहिंसाविधेर्जागरूकत्वान्न तक्रकौण्डिन्यन्यायेनाविरोधोपपादनं संभवतीत्युक्तिरपि पराहता । प्रतियोगिनः पुरुषार्थत्वे निषेधस्यापि पुरुषार्थत्वमिति नियमस्य पुरुषार्थपरस्त्रीगमन-

निषेधस्य क्रत्वर्थत्वदर्शनेन व्यभिचारेऽपि प्रतियोगिनः क्रत्वर्थत्वे निषेधस्यापि क्रत्वर्थस्य क्वापि व्यभिचारादर्शनान्न हिंस्यादित्यत्र निषेधस्य क्रत्वर्थहिंसाप्रतियोगिकत्वाङ्गीकारेऽस्य वाक्यस्यानारभ्याधीतत्वेन पुरुषार्थहिंसाया निषेधः पुरुषार्थ इति अवश्यमङ्गीकर्तव्यतयोक्तनियमबलात्क्रत्वर्थत्वस्यापि अङ्गीकर्तव्यत्वाद्वाक्यस्य वैरूप्यापत्त्या तत्परिहारार्थं क्रत्वर्थपुरुषार्थयोरन्यतरस्य निषेधे वाक्यार्थत्वेनावश्यमङ्गीकर्तव्ये शीघ्रोपस्थितपुरुषार्थहिंसाया एव निषेधः प्रकृतवाक्यार्थः पर्यवस्यति, इत्यस्मदिष्टसिद्धिर्भवत्येव । न च क्रत्वर्थप्रतियोगिकनिषेधस्य क्रत्वर्थत्वमिति नियमस्यापि क्रत्वर्थब्राह्मणापगूरणादिप्रतियोगिकपुरुषार्थनिषेधेषु व्यभिचारात्, तस्माद्ब्राह्मणाय नापगुरेत तस्मान्मलवद्वाससा न संवदेतेत्यादिस्थले निषेध्यकोटौ क्रत्वर्थब्राह्मणापगूरणक्रत्वर्थरजस्वलासंवादादीनामनुप्रवेशानङ्गीकारे कदाचित्क्रतुनिर्वृत्त्यर्थं ब्राह्मणापगूरणमलवद्वासःसंवादादिषु स्वाच्छन्द्यप्रसङ्गात्तत्र तस्य तस्यानुप्रवेशनीयत्वादुक्तनियमव्यभिचारस्यावश्यकत्वादुक्तनियमपरिपालनानुसारेण न हिंस्यादित्यत्र निषेध्यकोटितः क्रत्वर्थहिंसाया व्यावर्तनस्यानावश्यकत्वात्सर्वासामपि हिंसानां पुरुषार्थतया निषेधसंभवात्क्रत्वर्थहिंसाया अपि निषेधविषयत्वेन तस्या दुरितजनकत्वमशक्यनिवारणमिति वाच्यम् । यतः क्रतुनिर्वृत्त्यर्थमनुष्ठेयत्वेनाऽऽपतद्द्विविधमस्ति तयोरेकं लोकतः प्राप्तं विध्यविषयत्वात्क्रतोरनङ्गं केवलं तदुपकारकम्, क्रतूपयोगिद्रव्याभावविशिष्टस्य पुरुषस्यैव शेषभूतं च । यथा द्रव्यसंपादनार्थमनृतवदनमलवद्वासःसंवादादि । अपरं तु वैदिकं विधिसंस्पृष्टं क्रत्वङ्गभूतं च । यथा यागीयपशुहिंसादि । तत्र पूर्वोक्तानृतवदनमलवद्वासःसंवादादेर्वस्तुतः पुरुषशेषभूतत्वात्पुरुषार्थनिषेधनिषेध्यकोटावनुप्रवेशेऽपि वस्तुतः क्रतुशेषभूतस्य पुरुषार्थनिषेध्यकोटावनुप्रवेशस्याक्लृप्तत्वात्क्रतुशेषप्रतियोगिकनिषेधस्य क्रत्वर्थत्वमितिनियमस्याव्याघातात्तादृशनियमपरिपालनार्थं न हिंस्यादित्यत्र पुरुषार्थहिंसाया एव निषेधविषयत्वमित्यस्मदिष्टसिद्धिर्भवत्येव । अत एव ‘ अन्याधिष्ठितेषु पूर्ववदभिलापात् ’ ( ब्र० सू० ३ । १ । २४ ) इत्यस्मिन्नधिकरणे भामत्यामेवं कथितम्—न चेष्टादेः कर्मणः स्थावरशरीरोपभोग्यदुःखफलप्रसवहेतुभावः संभवति तस्य धर्मत्वेन सुखैकहेतुत्वात् । न च तद्गतायाः पशुहिंसाया न हिंस्यादितिनिषेधात्क्रत्वर्थाया अपि दुःखफलत्वसंभवः पुरुषार्थाया एव न

हिंस्यादितिप्रतिषेधात्। तथाहि न हिंस्यादिति निषेध्याधीननिरूपण-तया यदर्थं निषेध्यं तदर्थ एवं निषेधो विज्ञायते, इत्यादि। एवं हि विहिताया अपि हिंसाया दुःखफलत्वं, यदि विधिनिषेधयोरेकविषयत्वं तदेव नास्तीत्याह—पुरुषार्थाया एवेति। क्रत्वर्थो हि प्रतिषेधः क्रत्वर्थां हिंसां प्रतिषेधेत्तर्ह्येव क्रत्वर्थः स्यात्तच्च नास्तीति वदिष्यन्निषेध्यनिषेध-योरेकार्थतामाह तथाहीति। इति कल्पतरुः।

एवं च न हिंस्यादिति निषेधशास्त्रं लिङर्थभावनाद्वारा शीघ्रं कर्तुरे-वोपस्थितत्वादस्य वाक्यस्यानारभ्याधीतत्वेन क्रतोः प्रकरणादिनोप-स्थित्यसंभवात्पुरुषार्थहिंसाया एव निषेधबोधकमिति क्रत्वर्थहिंसाया अ-दुष्टत्वमव्याहतमेव। अत एव वाचस्पतिमिश्रैरुत्सर्गस्तु सः, अपवादः— अग्नीषोमीयं पशुमालभेतेति भाष्यस्याऽऽशयः "अयमेवार्थ उत्सर्गापवाद-कथनेनोपलक्षितः" इति ग्रन्थेनोद्घाटि। इदं च भामतीवाक्यं कल्पतरुका-रेणेत्थमवतार्य व्याख्यायि अत्र भाष्यकारेण न हिंस्यादित्युत्सर्गः, अग्नी-षोमीयमालभेतेत्यपवाद इत्युक्तं तदयुक्तम्। विशेषविधिविहितस्या-र्थस्य सामान्यविधिनाऽपि विषयीकारे हि उत्सर्गापवादन्यायः—यथा— आहवनीये जुहोति पदे जुहोतीति। होममात्रस्याऽऽहवनीयान्वयवि-धिना पदहोमस्यापि विषयीकारे पदहोमान्वयविशेषविधिना बाधात्त-दितरपरत्वं सामान्यशास्त्रस्य, अत्र तु वर्णितेन न्यायेन निषेधस्योत्प-त्तिसमय एव पुरुषार्थहिंसाविषयकत्वान्न क्रत्वर्थहिंसानुप्रवेश इत्याश-ङ्क्याऽऽह—अयमेवार्थ इति। एकस्य विशेषविधेः स्वविषयस्य क्रत्वर्थत्वेन पुरुषार्थत्वेन च विनियोगे विरोधात्सामान्यविषयत्वे च पुरुषार्थहिंसासु सावकाशस्य न क्रत्वर्थहिंसानिषेधविषयत्वं तदाऽधिकारान्तरानुप्रवेशि-त्वेन सापेक्षत्वं स्यादिति यो विषयनिष्कर्षः कृतोऽयमेवाविशेषप्रवृत्तत्वे-नावभासमानशास्त्रस्य विशेषन्याजनलक्षणगुणसाम्यादुत्सर्गापवाद इत्युक्त इत्यर्थ इति। एवं च न हिंस्यादित्यत्र सर्वज्ञवाचस्पत्यमलान-न्दयोः पुरुषार्थहिंसाया एव निषेधः क्रत्वर्थहिंसाया निषेधविषयत्वप्र-सक्तिरपि नास्तीत्यभिप्रायः स्पष्टमवगम्यते। ननु मरणोद्देश्यकमरणो-पधायकव्यापारत्वस्यैव हिंसिधातुप्रवृत्तिनिमित्तत्वादेतादृशप्रवृत्तिनिमि-त्तस्य यागीयहिंसायामप्यविशेषात्तस्या अपि न हिंस्यादिति वाक्यस्थ-हिंसिधातुना परामर्शनीयत्वाद्धिंस्यादित्याख्यातोपात्तभावनाद्वारा कर्तु-रेव प्रथमत उपस्थितत्वेऽपि प्रकृते हिंसाया उद्देश्यत्वेन तत्र

विशेषणत्वेन संबन्धासंभवात्, तथाऽपि तत्र संबन्धाङ्गीकार आहवनीयवाक्यस्थजुहोतिनाऽपि तत्रत्याख्याततोपात्तभावनाक्षिप्तपुरुषस्य जुहोत्यर्थहोमे विशेषणत्वेनान्वयावश्यंभावेन पुरुषार्थहोमानामेवानुवाद्यत्वसंभवाज्ज्योतिष्टोमक्रत्वर्थत्वाद्धोमस्य तेनाविषयीकरणादाहवनीयपदवाक्ययोरुत्सर्गापवादभावस्य तान्त्रिकसंमतस्य अत्युद्धारप्रसङ्गाच्चाग्निष्ठहोमादीनां क्रत्वर्थानामाहवनीयासिद्धिप्रसङ्गाच्च भावनाद्वारोपस्थितस्यापि पुरुषस्योद्देश्यविशेषणत्वाङ्गीकारासंभवात्क्रत्वर्थप्रतियोगिकनिषेधस्य क्रत्वर्थत्वमिति नियमस्यापि क्रत्वर्थमलवद्वासःपत्नीसंवादादिप्रतियोगिकपुरुषार्थनिषेधान्तर्भावेण व्यभिचाराच्च हिंस्यादित्यत्र क्रत्वर्थहिंसाया अपि निषेधविषयत्वादनिष्टसाधनत्वं संभवत्येवेति चेन्नैवम् । न हिंस्यादिति निषेध्यकोटित उभाभ्यामपि अवश्यं व्यावर्तनीयानां मरणान्तप्रायश्चित्ताहवाभिमुखहननादीनां व्यावर्तनार्थं निषेध्यकोटावनुपदिष्टवैशेषिकप्रायश्चित्तकविषयभूतहिंसानिषेध्यविशेषणस्याऽऽवश्यकत्वात्तेन यागीयहिंसाया अपि व्यावर्तनसंभवात्तस्या अनिष्टसाधनत्वं कथमपि न संभवतीत्यलं पल्लवितेन । यदपि न च—

> यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
> यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥
> या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।
> अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥

इतिमनुवाक्यादिभिः पापाभावप्रतिपादकैर्निन्दाप्रायश्चित्तोपदेशाद्यसमभिव्याहृतविधिवाक्यबोध्यप्रवर्तनायाः स्वविषयप्रवृत्तिविषये धात्वर्थे सामान्यतोऽनर्थहेतुत्वप्रतिक्षेपकत्वकल्पनेन सामान्यनिषेधस्य तदतिरिक्तपरत्वमाक्षेपलभ्याया अपि विधितात्पर्यविषयत्वेन तत्राप्यनर्थहेतुत्वप्रतिक्षेपात्, अत एवान्यत्र हिंसां चैवाविधानतः, इत्यविधानेन हिंसैव पापजनिकोक्ता । श्रुतिरपि 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' इत्याह । तीर्थं यज्ञः । तीर्थं शास्त्राध्वरेतिकोशात् । अत एव मरणान्तप्रायश्चित्ताहवाभिमुखहननोचितदण्डरूपचोरहननादीनां न पापजनकत्वं शुद्ध्यर्थं विहितमरणे तस्यायुक्तत्वात्, न दोषो हिंसायामाहवे, इत्युक्तेश्चोराद्यवधे राज्ञो दोषश्रवणाच्च । तस्माद्गर्हितहिंसाविषयोऽयं निषेधः । अगर्हिता चानुपदिष्टप्रायश्चित्तिका हिंसा । एवं सर्वनिषेधेषु द्रष्टव्यमिति वाच्यम् ।

मनुवचनेऽवध इत्यादावनुदरा कन्येतिवदल्पार्थे * नञः सत्त्वात् । अन्यथा घटोऽघट इतिवदस्याबोधकत्वेनावधपदस्य पापजनकत्वलक्षणापत्तेः । यज्ञानुपक्रम्य—

' अहिंसा परमो धर्मो गीतो वै मनुना पुरा ' ।

इति ब्रह्मवैवर्तप्रथमखण्ड उक्ततया च मदुक्तस्यैवौचित्यात् । परमत्वं च पापाजनकत्वेनास्याल्पीयसा प्रायश्चित्तेन परिहर्तुं शक्यत्वात्तत्र न दोषः । पशुहिंसाजन्यपापस्याल्पप्रायश्चित्तोपदेशेन बहुव्ययायाससाध्ययागजन्यस्वर्गात्प्रथमभेदाल्पस्य यागविषयेऽप्यल्पत्वबोधनात् । एवं च न तद्बलेन विधेः स्वविषयेऽनर्थहेतुताप्रतिक्षेपकत्वमिति तदतीव मन्दम् । मनुस्मृतिपद्यस्थावधपदघटकनञोऽनुदरा कन्येतिवदल्पार्थकत्वं न तु पापजनकत्वार्थकता । तथा सति लक्षणापत्तेरिति वदतस्तत्रभवतोऽल्पार्थकत्वे लक्षणा नास्तीति खलु अभिप्रायः प्रतीयते । तत्तु न युज्यते । अल्पार्थकत्वेऽपि लक्षणाया अशक्यनिवारणत्वात् । नह्यल्पत्वे नञः शक्तिः । तत्राभावत्वावच्छिन्नमात्रशक्तत्वात् । अल्पत्वावच्छिन्नेऽपि शक्तत्वे हर्यादिपदवन्नानार्थकत्वमापद्येत । सत्यां गतौ तत्स्वीकारो नोचितः । किं च वैयाकरणेन भवताऽपि अल्पत्वावच्छिन्ने शक्तिर्नेष्यते । यतस्त्वया नञर्थवादे यद्वा नञ्, समभिव्याहृतघटादिशब्दानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकः, यथा सिंहो माणवक इत्यादौ माणवकादिपदानि । सिंहादिपदस्याऽऽरोपितसिंहत्ववद्बोधकत्वेऽनुदरा कन्येत्यादावपि अल्पत्वादिनोदराभावमारोप्य नञ्समभिव्याहार आरोपितोदरबुद्ध्या तन्मूलाल्पत्वादौ विश्रमः । अद्विज इत्यादौ च तद्भिन्नमूलकमारोपितप्रवृत्तिनिमित्तकत्वमिति भेदे विश्रान्तिः । अधर्म इत्यादौ च विरोधिनि आरोपितत्वस्य नञ्वाच्यत्वे तु तस्य ब्राह्मणादिपदशक्येऽनारोपितब्राह्मण्यवति संबन्धो दुरुपपादः । तस्य

* तदुक्तं हरिणा—तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥

इति । तत्सादृश्यम्—यदमेऽनश्वाऽयमित्यादौ । अभावः—गेहे घटो नास्तीत्यत्र । तदन्यत्वम्—अमनुष्यं प्राणिनमानयेत्यादौ । तदल्पत्वम्—अनुदरा कन्या । अत्रार्थात्स्थूलत्वनिषेधेनोदरस्याल्पत्वं गम्यते । अप्राशस्त्यम्—ब्राह्मणेऽब्राह्मणोऽयमिति प्रयोगे । विरोधः—असुरोऽधर्म इति प्रयोगे । इत्युदाहरणानि बोध्यानि ।

प्रसिद्धार्थपरित्यागोऽप्रसिद्धार्थपरिग्रह इत्युभयं द्योतककृत्यमिति नञ्-सूत्रे भाष्ये स्पष्टमिति भाषितम् । एवं च यथाऽनुदरा कन्येत्यादावल्पत्वप्रत्यक्षाविषयत्वादिना प्रथमत एवोदराभावमारोप्य नञ्समभिव्याहारे सति यथाऽऽरोपितोदरबुद्ध्याऽल्पत्वादौ विश्रमः कथ्यते, तथैवावध इत्यादिस्थलेऽपि पापाजनकत्वनिमित्तेन वस्तुतो वधत्ववति वधत्वाभावमारोप्य नञ्समभिव्याहार आरोपितवधत्वबुद्ध्या पापाजनकत्वे विश्रमः कथ्यताम् । नह्यल्पत्व एव विश्रम इति नियन्तुं शक्यते । अद्विजोऽधर्म इत्यादौ भेदे विरोधिनि च विश्रान्तेस्त्वयैव कथितत्वात् । एवं चावध इत्यत्र नञः पापाजनकत्वार्थकत्वे लक्षणाऽल्पार्थकत्वे न लक्षणादोष इति यदत्रोच्यते तत्पूर्वत्वदीयग्रन्थेनैव विरुद्धमिति न किंचिदेतत् । अत एव पापाजनकत्वावच्छिन्नबोधकत्वस्वीकाराद्घटोऽघट इतिवच्छाब्दबोधाजनकत्वदोषोऽपि नास्तीत्यवधेयम् । अत एव कुल्लूकभट्टेन

> ' यावन्ति पशुरोमाणि तावत्कृत्वेह मारणम् ।
> वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि '॥

इतिपूर्ववाक्यस्य देवताद्युद्देशमन्तरेणाऽऽत्मार्थं यः पशून्हन्ति स वृथा पशुघ्नो मृतः सन्यावत्संख्यानि पशुरोमाणि तावत्संख्याभूतं जन्मनि जन्मनि मारणं प्राप्नोति तस्माद्वृथा पशुं न हन्यात्, इति विवरणं कृत्वा यज्ञार्थे तु पशुवधे न दोष इत्याह—यज्ञार्थं पशव इति, इत्यनेन ग्रन्थेनेदं पद्यमवतार्य यज्ञसिद्ध्यर्थं प्रजापतिनाऽऽत्मनैव, आदरेण पशवः सृष्टाः, यज्ञश्चाग्नौ प्रास्ताऽऽहुतिरितिन्यायेनास्यसर्वस्यास्य जगतो विवृद्ध्यर्थस्तस्माद्यज्ञे वधोऽवध एव वधजन्यदोषाभावादिति व्याख्यातम् । एवं तेनैव महापण्डितेन कुल्लूकभट्टेन कथं तर्हि स्यार्द्धिदिकी देक्षादिपशुहिंसा नाधर्मायेत्यत आह—या वेदविहितेति । इत्यनेन ग्रन्थेन ' या वेदविहिता हिंसा ' इत्यादिपद्यं पातयित्वा या श्रुतिविहितकर्मविशेषदेशकालादिनिमित्ता, अस्मिञ्जगति स्थावरजङ्गमात्मनि अहिंसामेव तां जानीयात्। हिंसाजन्याधर्मविरहात् । दैक्षपशुहननमधर्मः प्राणिहननत्वाद्ब्राह्मणहननवत्, इत्याद्यनुमानमुपजीव्यशास्त्रबाधादेव न प्रवर्तते । दृष्टान्तीकृतब्राह्मणहननस्यापि अधर्मत्वे शास्त्रमेवोपजीव्यम् । वेदाद्धर्मो हि निर्बभौ यस्मादनन्यप्रमाणको धर्मो वेदादेव निःशेषेण प्रकाशतां गत इति विवृ-

तम् । किं च सामान्यतः पशुहिंसाजन्यपापस्याल्पप्रायश्चित्तोपदेशेऽपि विशिष्य यागीयहिंसायास्तादृशोपदेशो नास्ति । पूर्वोक्तयुक्त्या सामान्योपदेशस्य विहितहिंसातिरिक्तपरत्वं च संभवतीति पशुहिंसाजन्यपापस्याल्पप्रायश्चित्तोपदेशेनेत्यादिकमपास्तम् । अपि च नास्माभिर्मनुस्मृतिवाक्यं वर्तत इति तद्बलात्सामान्यतोऽनर्थहेतुत्वप्रतिक्षेपकत्वकल्पनेन निषेधवाक्यस्य तदतिरिक्तपरत्वमुच्यते, अपि तु पूर्वोक्तरीत्या स्मृतिवाक्यज्ञानात्पूर्वमेव विधिनिषेधशास्त्रयोः सामान्यविशेषभावावगमाद्धिंसाविध्यात्मकविशेषशास्त्रमाहिम्नैव सामान्यनिषेधशास्त्रस्य यागीयहिंसातिरिक्तहिंसानिषेधपरत्वमभ्युपगम्यते परंतु तच्चोपोद्बलकतया शिष्टानां वचनमाद्रियते । स्मृत्यनुसारेणैव श्रुत्यर्थकल्पने विरोधाधिकरणसिद्धान्तो दत्ताञ्जलिः स्यात् । प्रत्यक्षश्रुत्योर्विरोधे स्मृत्यनुगृहीता श्रुतिः प्रबलेति कथ्यते । तस्मात्, एवं च, न तद्बलेन विधेः स्वविषयेऽनर्थहेतुताप्रतिक्षेपकत्वमित्यादि अपास्तम्, यदपि अत एव गीतायां 'यज्ञानां जपयज्ञोऽस्मि' इत्यादिना जपयज्ञस्याहिंसारूपत्वेन प्राशस्त्यमुक्तम् । तथा—

> 'स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
> धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' ॥
> इत्युपक्रम्य
> 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
> ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि' ॥

इत्यनेन विहितेऽपि युद्धे पापं वदताऽतादृशस्य यज्ञेऽपि तदुक्तप्रायमेवेति, तदपि पूर्वापरग्रन्थानवलोकनानिबन्धनमेव । यज्ञानां जपयज्ञोऽस्मीत्यादिकं यया कयाचिद्विधया प्रशंसाप्रदर्शनार्थं प्रवृत्तम्, न तु वस्तुतोऽपि तत्र तादृशी विधाऽपेक्ष्यते । यदि वस्तुतोऽपि जपयज्ञस्येतरयज्ञापेक्षया हिंसाप्रयुक्तदोषाभाववत्त्वेनोत्कर्षो विवक्ष्येत तर्हि भगवतेदमेव कर्तव्यमित्युपदिश्येत न तु प्रत्यवायजनकीभूतहिंसाबहुलः सङ्ग्रामः । उपदिश्यते चात्र—

> 'अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि' ।

इत्यादिना । एवं नैवं पापमवाप्स्यसीत्यत्र फलकामनां त्यक्त्वा युध्यमानो गुरुब्राह्मणवधनिमित्तं पापं न प्राप्स्यसीति व्याख्याने हतो

वा प्राप्स्यासि स्वर्गमिति पूर्वश्लोके फलकामनाप्रयुक्तयुद्धकर्तव्यतापर्त्वे गुर्वादिवधप्रयुक्तपापमस्तीत्युद्भावितं स्यात् । न च वाच्यं पूर्वस्मिन्पक्षे स्वर्गादिफलकीर्तनमानुषङ्गिकफलोक्तिमात्रम् । न तु फलकामनाप्रयुक्त-युद्धोपदेश इति । सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ, इति श्रवणेऽपि यत्फ-लकामनया कर्मानुष्ठानं तदेव फलं तस्मिन्प्रयोग इति योगसिद्ध्यधिक-रणे व्यवस्थापिततया कामनां विना स्वर्गस्याऽऽनुषङ्गिकत्वायोगात् । न च तथाऽपि हतो वा जित्वा वेति नार्जुनोद्देशेनोक्तं तस्य जयापजया-भिसंधिशून्यत्वादिति वाच्यम् । यद्वा जयेम यदि वा नो जयेयुरित्यर्जु-नोक्त्या मया हतांस्त्वं जहि मा व्यथिष्ठाः । युध्यस्व जेतासि रणे सपत्नानिति भगवदुक्त्या च तस्य जयाभिसंधिप्रदर्शनात् । तस्मात्सका-मत्वपक्षे युद्धानुष्ठानप्रकारः पूर्वश्लोके वर्णितः । मुमुक्षुत्वपक्षे तदनुष्ठान-प्रकारोऽस्मिञ्श्लोके वर्णितः । मुमुक्षुत्वपक्षे तदनुष्ठानप्रकारोऽस्मिञ्श्लोक इत्येव व्याख्येयम् । यत्तु न चापशब्दज्ञानजाधर्मस्य कूपखानकन्यायेन सुशब्दज्ञानजधर्मेण नाशः फलान्तरं चेति भाष्ये परपशायामुक्तम् । कूपखानकस्तत्खननवेलायां मृदा लिप्तः ततो जलं लब्ध्वा तं लेपं दूरी करोति फलान्तरं च लभते तेन न्यायेन यज्ञजधर्मेण तत्पापनाशः फलान्तरलाभश्चेति न दोष इति वाच्यम् । अपशब्दज्ञानादधर्मस्यावा-चनिकत्वेन केवलं वैपरीत्यमात्रेण कल्प्यस्यातिस्वल्पत्वात् । उत्कृष्टेन साधुशब्दज्ञानजधर्मेण नाशेऽपि न हिंस्यादितिवचनबोधितपापस्य तेन धर्मेण वचनं विना नाशायोगादुक्तगीतावाक्याच्चेति तन्मन्दम् । अनुक्तो-त्तरत्वात् । अस्माभिरनुक्तं खलु भवानुक्तवदापाद्योत्तरयितुं प्रयतते । नह्यस्माभिरपशब्दज्ञानादधर्मोत्पादवत्यागीयहिंसातः कदाऽप्यधर्मोत्पत्ति-रिष्यते किंतु तस्य कदाऽप्यनिषिद्धत्वाज्ज्योतिष्टोमादिवत्केवलधर्मार्थ-त्वमेवाभ्युपगम्यते । अस्य निषेधप्रतियोगिता स्वप्नेऽपि यथा नास्ति तथाऽस्माभिः सविस्तरं पूर्वमुपपादितम् । एवं च कूपखानकन्यायेनाभ्यु-पगतं सुशब्दज्ञानजधर्मप्रयुक्तमपशब्दज्ञानजन्याधर्मनाशं दृष्टान्तीकृत्य साधितं ज्योतिष्टोमादिजधर्मप्रयुक्तं क्रत्वर्थहिंसाजन्याधर्मनाशं सिद्धान्त्य-भिमतत्वेनाऽऽपाद्य, अनन्तरं दृष्टान्तदार्ष्टान्तिकवैषम्यप्रदर्शनपूर्वकं तत्ख-ण्डनमस्थाने कलकलप्रायं त्वयैवानुमोदनीयम् । उक्तगीतावाक्याच्चेति यदवादि स च हेत्वाभास एव । यद्युक्तगीतावाक्यं भवदभिमतमर्थम-बोधयिष्यत तदेदं समीचीनहेतुभावमगमिष्यत । तस्य वाक्यस्यार्थः

पूर्वमेवास्माभिरन्यथोपपादितः। तस्मादिदं हेतुभावं न प्रतिपद्यत एवे-त्यलम्। यदपि अत एवेन्द्रादेः शताश्वमेधफलस्वर्गभोगसमये रावणम-हिषासुरादिभ्यो दुःखधाराः श्रुतिपुराणादिषूपवर्णिता यज्ञान्तर्गतहिंसादि-जन्यपापफलस्य यज्ञफलभोगान्तरुत्पत्तेरुपपत्तिसिद्धत्वादिति तत्तु अवि-वेकिव्यवहारसमम्। यतः कर्म त्रिविधं भवति संचितं प्रारब्धमा-गामि चेति। तत्र प्रारब्धस्योपभोगेनैव क्षय इति सर्वेषां तान्त्रिकाणां संप्रतिपत्तिः। प्रारब्धं नाम मरणकाल उद्बोधकविशेषमहिम्ना फलदानव्यग्रतां यत्कर्म प्राप्नोति तदेव। तदा यत्कर्मफलदानाया-भिव्यक्तं भवति तदानीं तत्कर्मनान्तरीयककर्मान्तरमपि फलदानव्यग्रतां प्राप्नोतीति न नियमोऽस्ति न वा पुण्यं कर्म फलदानायोन्मुखं भवति चेत्तदानीं तन्नान्तरीयकमेव पापं कर्म फलदानव्यग्रं भवतीति नियमः। येनेन्द्रादीनां शताश्वमेधादिफलभूतस्वर्गादिभोगसमये दुःखधाराया अपि संजातत्वेन तदन्यथानुपपत्तिप्रकल्प्यमानफलोन्मुखयत्तद्दुष्टकर्म तादृशाश्व-मेधाद्यन्तर्गतहिंसारूपमेव वक्तव्यमिति हिंसाया दुष्टताऽव्याहता भवेत्। किंतु पुण्यकर्माभिव्यक्तिकाले तत्तदुद्बोधकविशेषमहिम्ना तन्नान्तरीयक-मन्यद्वा पापं कर्मोत्पद्यमिन्येव दुःखफलानुभवान्यथानुपपत्त्या प्रकल्पनी-यम्। एवं च यागीयहिंसादुष्टताया उभयासंप्रतिपन्नत्वादुभयसंप्रतिप-न्नदुष्टताकमन्यदेव पापं कर्म तदानीं प्रारब्धफलकमिति वक्तुं शक्यत्वादि-न्द्रादिदुःखधारानुभवो न यागीयहिंसादुष्टतासाधको भवितुमर्हतीत्यवधे-यम्। एतेन 'एतेनाध्वर इति यज्ञनाम' ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधोऽध्वर इति निरुक्तमाहिंस्र इति तद्भाष्यमपि व्याख्यातं नञोऽल्पार्थकत्वात्। अत एव तस्मादभ्युदययोगादहिंस्र इत्युपपद्यत इति तद्भाष्य उपसंहृतम्, इति परास्तम्। नञोऽल्पत्वावच्छिन्ने मुख्या वृत्तिर्नास्तीति पूर्वमेव बहु प्रपञ्चितम्। अत एवेत्याद्यपि असंगतम्। तथाहि तत्रभवान्प्राजंमन्यस्तस्मा-त्पापजनकहिंसादोषदूषितत्वेन ज्योतिष्टोमादिक्रतोर्हिंस्रत्वादहिंस्रत्वासंभ-वेऽपि स्वर्गादिरूपाभ्युदयसंबन्धाद्गौणमहिंस्रत्वमुपपद्यत इत्यर्थकं तस्मा-दभ्युदययोगादहिंस्र इति भाष्यवाक्यमित्यभिप्रैति। नायं साधुरभिप्रायः। लोके हिंसाया दुष्टत्वेऽपि क्रत्वर्थहिंसाया विहितत्वेनानिष्टामिश्रितेष्टज-नकत्वस्यैव वक्तव्यत्वात्। तादृशहिंसायुक्तयागस्यापि हिंस्रत्वाभावादहिंस्रत्वं वस्तुत उपपद्यत इत्येवंरूपस्यार्थस्य स्वरसतस्तद्वाक्यात्प्रतीय-मानत्वात्। ननु, उक्तं च 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृ-

तिरिति, इति नतु असंबद्धप्रलापित्वमात्मनः प्रख्यापयति । तथाहि—इदं वाक्यं भवतः कथं यागीयहिंसादुष्टत्वे साधकं भवति । नत्वत्र यागीयहिंसादुष्टत्वप्रतीतिगन्धोऽप्यस्ति । अत्र तु स्वर्गलोके वसतोऽपि स्वर्गस्य कर्मजन्यफलत्वात्कर्मणश्च कालपरिच्छिन्नफलजनकत्वस्वाभाव्यात्किंचित्कालं फलभोगानन्तरं मर्त्यलोके पतनावश्यंभावात्तस्याप्यात्यन्तिकसुखप्राप्तिर्नास्तीति खलु स्फुटं प्रतीयते । निर्वृतिशब्दस्याऽऽत्यन्तिकसुखे प्रसिद्धत्वात् । नह्येतावता यागीयहिंसादुष्टता प्रतीयते । अदुष्टत्ववादिभिरस्माभिरपि हिंसायुक्तयज्ञस्य निर्वृतिजनकत्वं नाभ्युपगम्यते । किंतु नश्वरफलजनकत्वमेवाभ्युपगम्यते । न च यागीयहिंसाया दुष्टत्वादेव तत्फलस्य क्षयिष्णुता । अन्यथाऽऽत्यन्तिकत्वं संभवेदिति वाच्यम् । तथा सति अदुष्टत्वेनोभयवादिसंप्रतिपन्नानां जपयज्ञपाकयज्ञादीनां नित्यमोक्षफलजनकत्वापातेन ज्ञानवैयर्थ्यप्रसङ्गात् । नहि प्रामाणिकाः सत्पुरुषा ज्ञानमन्तरा पूर्वोक्तकर्मभिर्मोक्षाख्यं फलं संभवतीत्यभ्युपगच्छन्ति । अतो ज्ञानादेव केवलादात्यान्तिकं निर्वृत्यपरपर्यायं सुखं न तु कर्मण इति ज्ञानप्रशंसार्थमिदं वाक्यं प्रावर्तत न तु भवदभिमतयागीयहिंसादुष्टताबोधनार्थमित्यलम् । यत्तु अहिंसन्सर्वेति श्रुतिस्त्ववैधहिंसात्यागस्येष्टसाधनत्वं वैध्याश्च न तत्त्वमाह न तु वैध्या अनिष्टसाधनत्वाभावम् । हिंसाविधयोऽपि हिंसायाः स्वर्गसाधनत्वमात्रमाहुर्न त्वनर्थहेतुताप्रतिक्षेपमपि । अल्पायुष्ट्वाद्यनिष्टबोधकस्मृतिविरोधात् । तदुक्तं योगसूत्रभाष्ये यदि कथंचित्पुण्यावापगता हिंसा भवेत्तदा तत्र सुखप्राप्तावपि अल्पायुर्भवेदिति । तत्र श्रुतिस्मृत्योर्बलाबलानभिज्ञत्वेनाऽऽत्मनो मूर्खतामावेदयति । हिंसाविधीनां स्वविधेये प्रवृत्तिसिद्ध्यर्थमनिष्टसाधनत्वात्समानाधिकरणेष्टसाधनत्वपर्यवसायिबलवदिष्टसाधनत्वबोधनमावश्यकमिति पूर्वमुक्तं न विस्मर्तव्यम् । पातञ्जलस्मृत्यनुसारेण यदि श्रुतिवाक्यं नीयते तर्हि श्रुतिस्मृतिविरोधे श्रुतिरेव प्रबला, इत्येतादृशार्थव्यवस्थापकविरोधाधिकरणं दत्ताञ्जलितामियात् । यदि पातञ्जलस्मृत्यनवकाशदोषप्रसङ्गभिया श्रुतेरेतादृशार्थपरत्वं कल्प्यते तर्हि यागीयहिंसादुष्टत्वाभावबोधकस्मृत्यनवकाशदोषप्रसङ्गभिया तादृशार्थपरत्वमपि कल्पनीयमापतेत् । नहि पतञ्जलेरेव सर्वज्ञत्वात्तदीयस्मृतेरेव प्रामाण्यात्तदनुसारेणैव वेदवाक्यं नेयं न तु इतरेषामसर्वज्ञत्वात्तदीयस्मृतीनामप्रामाण्यात्तदनुसारेण वेदवाक्यं

नेतुं शक्यत इति कश्चित्प्रामाणिकोऽभ्युपगच्छति । एतादृशविषयचर्चा 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात' इत्यस्मिन्नधिकरणे नितरामकारि भगवत्पादैः । किंच पातञ्जलमतस्यैव वेदबाह्यत्वं भगवता बादरायणेन 'एतेन योगः प्रत्युक्तः' इत्यनेन व्यक्ततममुद्घाटीत्यलम् । यत्तु अत एव क्षत्रियाणामपि युधिष्ठिरादीनां स्वधर्मयुद्धेन जानज्ञातिहिंसायां प्रायश्चित्तस्मरणमिति, इति । तथा च भागवते मुचुकुन्दं प्रति कृष्णवाक्यम्—

क्षत्रधर्मे स्थितो जन्तूनवधीर्मृगयादिभिः ।
समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥ इति ।

आदिना युद्धम् । मार्कण्डेयेऽपि—

'तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसंनिधिम् ।
त्रयीधर्ममधर्माढ्यं किंपाकफलसंनिभम्' ॥ इति ।

किंपाको निम्बः, इन्द्रवारुणीत्यपरे, इति तत्तुच्छम् । न हि युधिष्ठिरादीनां युद्धप्रयुक्तपापनिवारणार्थं विशिष्य प्रायश्चित्तानुष्ठानं कुत्रापि स्मृतम् । राजसूयानुष्ठानं तु प्रायश्चित्तानुष्ठानरूपं भवितुं नार्हति राजा राजसूयेन स्वाराज्यकामो यजेतेति श्रुत्या राजसूयस्य स्वाराज्यफलकत्वबोधनात् । तस्य युद्धात्पूर्वं कृतत्वाच्च । भागवतमार्कण्डेयपुराणयोः कर्मनिन्दा च नहि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति न्यायेन विधेयप्रशंसार्थं प्रवृत्ता न तु वस्तुतः कर्मणो निन्द्यत्वबुद्ध्या । प्रकृते भागवते कर्मनिन्दया भक्तिप्रशंसैव विवक्षिता न तु कर्मनिन्दायामपि तात्पर्यम् । श्रुतावपि एवं बहुषु स्थलेषु दृश्यते । तथाहि 'यदुदिते सूर्ये प्रातर्जुहुयाद्यदनुदिते सूर्ये प्रातर्जुहुयात्' इत्यादिनोदितानुदितहोमयोरुभयोरपि निन्दा प्रतीयते, तावतोभयमपि निन्द्यमिति नाभ्युपगम्यते किंतूदितनिन्दयाऽनुदितहोमः प्रशस्तोऽनुदितनिन्दयोदितहोमः प्रशस्त इत्येवाभ्युपगम्यते । मार्कण्डेयपुराणस्थवाक्यस्यापि एवमेवाभिप्रायो द्रष्टव्य इति । यदपि मोक्षधर्मे भारतेऽपि पितापुत्रसंवादे—

तातैतद्बहुशोऽभ्यस्तं जन्मजन्मान्तरेष्वपि ।
त्रयीधर्ममधर्माढ्यं न सम्यक्प्रतिभाति मे ॥

तथा केनचिदुञ्छवृत्तिना मृगरूपिणो धर्मस्य प्रलोभनावाक्यैर्वधे कृत उक्तम्—

'तस्य तेनानुभावेन मृगहिंसात्मनस्तदा ।
तपो महत्समुत्सन्नं तस्माद्धिंसा न यज्ञिया ॥

इति । यज्ञियाऽपि हिंसा न केवलं धर्मायेत्यर्थः । एवं चोपयये यज्ञ एव सात्त्विकब्राह्मणस्याधिकारः ।

'नमो ब्राह्मण यज्ञाय ये च यज्ञविदो जनाः ।
स्वयज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमिहाऽऽस्थिताः ॥
यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा '॥

इति वनपर्वणि जाजलिसंवाद उक्तेश्च ।

'अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैः परैः ।
संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता ॥
सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत् ।
कामकाराद्विहिंसन्ति बहिर्वेद्यां पशून्नराः '॥

इति हिंसायुक्तयज्ञनिन्दापूर्वकं

'विष्णुमेवाभिजानन्ति सर्वयागेषु ब्राह्मणाः ।
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् '॥

इति मोक्षधर्मेषु विचिख्नुवाक्याच्च । सा यथा पापाय तथा वेद्यन्तर्गताऽपीति तदर्थः । नास्तिकैरिति करणे तृतीया । तैः करणभूतैस्तानुद्दिश्येति यावत् । विष्णुमेवेति विष्णुत्वेनैव सर्वदेवता जानन्तीत्यर्थः । अत एव सर्वयागेषु ब्राह्मणानां पायसपुष्पैरेव तत्तद्यागकल्पनेत्यर्थ इति, तत्तु भारतवाक्यतात्पर्यानभिज्ञतामूलकम् । यतो यथा मुण्डकाद्युपनिषत्सु प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्मेत्यादिना यज्ञनिन्दा वस्तुतो यज्ञस्य निन्द्यत्वबुद्ध्या न क्रियते किंतु कर्ममार्गे निर्वेदसंपादनद्वारा ज्ञानमार्गे प्रवर्तनार्थमित्युच्यते तथैव शान्तिपर्वणि मोक्षधर्मे विद्यमानवाक्यैः क्रियमाणा यज्ञनिन्दा वस्तुतो न यज्ञानां निन्द्यत्वबोधनार्थं किंतु तत्र वैराग्यसंपादनद्वारा शान्तिप्रसाधनार्थम् । अत एव शान्तिपर्वणि मोक्षधर्म एतेषां वाक्यानां पठनम् । अत एव नीलकण्ठसुधिया भारत-

भावदीपे नास्तिकैरिति संशयात्मभिरिति च पदयोर्नास्ति ब्रह्मेति वदद्भिः, आत्मा देहोऽन्यो वाऽन्योऽपि कर्ता, अकर्ता वा, अकर्ताऽपि एकोऽनेको वा, एकोऽपि सङ्गवानसङ्गो वा, इत्यादिरूपः संशयस्तद्रूपात्मा चित्तं येषां तैरिति यथाक्रमं विवरणं कृतम्। एवं चाज्ञानिनां कर्म विहितमिति सिद्धं भवतीति नास्तिकैरिति पदं नास्तिकानुद्दिश्येति त्वयैव व्याख्यातत्वात् ब्रह्मास्तित्वाद्यज्ञानवन्त एव कर्मसु अधिकृता इत्येवास्माकमपि सिद्धान्तः। किं च कामकाराद्विहिंसन्ति, इत्यत्र कामकारपदं नीलकण्ठेन महापण्डितेनेत्थमाक्षेपसमाधानपूर्वकं व्याख्यातम्। तथाहि ननु वसन्ते वसन्ते ज्योतिषा यजेत, प्रतिसंवत्सरं सोमः, इति श्रुतिस्मृतिभ्यां नित्यत्वेन विहितेषु ज्योतिष्टोमादीषु विहितः पश्वालम्भः कथं कामकारात्स्यात्, जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः, इत्यृणश्रुतेश्च, अनधीत्यानिष्ट्वा प्रजामनुत्पाद्य च कथमनृणो वा स्यात्, अनाहिताग्नितायाश्चोपपातकेषु स्मरणात्,कृताधानस्य समर्थस्य क्रत्वनारम्भो वा कथं स्यात्, इति चेन्न। गार्हस्थ्यस्यैव कामकारत्वे तन्मूलकानामाधानादिनामपि तथात्वात्। जायमानो वा इत्यत्रापि नोत्पद्यमान इत्यर्थः किंतु गृहस्थोऽधिकारी वा संपद्यमान इति व्याख्येयम्, इत्यनेन समाधानवाक्येन गृहस्थाश्रमस्य रागप्रयुक्तत्वात्तन्मूलककर्मणामपि रागप्रयुक्तत्वं कथितं न तु कलञ्जभक्षणादिवद्विहितत्वाभावेन केवलरागाधीनत्वेन रागप्रयुक्तत्वमभ्यधायि। तस्मान्नैष्ठिकब्रह्मचारितया गुरुकुले वास आहोस्विद्ब्रह्मचर्यानन्तरमेव मोक्षाश्रमस्वीकार उत्कृष्ट इति नीलकण्ठाभिप्रायः प्रतीयते। अयं साधुरेवाध्यवसायः। न चैतावता हिंसायुक्तकर्मणो दुष्टत्वं सिद्धं भवति। किं चाव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैः परैः, इत्यादिश्लोकघटितोऽध्यायो नीलकण्ठेनाऽऽदावेवेत्थमवतारितः। एवं तुलाधारवाक्यैरहिंसात्मकस्य धर्मस्य श्रैष्ठ्यमुपपाद्य तस्यैव स्तुतये हिंसात्मकं धर्मं निन्दत्याख्यायिकामुखेनात्रापीत्यादिना। अनेन पातनिकावाक्येन नहि निन्दान्यायेनात्र क्रियमाणा हिंसायुक्तयज्ञनिन्दाऽहिंसात्मकधर्मस्य स्तुत्यर्थं प्रवृत्ता न तु वस्तुतो हिंसायुक्तकर्मणो निन्द्यत्वबुद्ध्या, इत्यर्थः स्पष्टं प्रतीयते। एवं चेमानि भारतवाक्यानि हिंसायुक्तयज्ञस्य दुष्टत्वे न प्रमाणानीत्यलम्। यत्तु तैत्तिरीयश्रुतावपि पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानादित्युक्तं तत्र पापमस्व एव हि ततः

परागावर्तनं युक्तं नान्यथा । रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नन्तः स्वाध्यायमधीयीतेति ऋत्विजां प्रायश्चित्तोपदेशाच्च । सोऽपि पापसत्त्व एव युक्त इति । तत्तु श्रुतितात्पर्यावबोधनिबन्धनमेव । यतो यदि अध्वर्योः पापसंभवभिया परागावर्तनं तर्हि प्रतिप्रस्थातुरपि पापभीरुतासंभवात्परागावर्तनं युक्तम् । किं चाङ्गभूतसंज्ञपनस्य याजुर्वैदिकपदार्थत्वादाध्वर्यवमिति समाख्यया नियमेनाध्वर्युणा कर्तव्यत्वात्पापभीरुतया ततः परावर्तने तस्य लोपेन क्रतुवैगुण्यापत्तिः । अपि चैवमेवान्यायाससाध्यानामध्वर्युकर्तृकाणां बहूनां पदार्थानां सत्त्वादायासभीरुतया तेभ्योऽपि परावर्तनं कुतो नोच्यते । किं चाऽऽर्त्विज्यप्रयुक्तपापशरीरायासादिकमविगणय्य द्रव्यलोभेनाऽऽर्त्विज्ये प्रवर्तमान ऋत्विक्कथंकारं स्वावश्यकर्तव्यात्पदार्थात्पापभीरुतया निवर्तेत । श्रुतिश्च कथं निवर्तनस्य पापमूलकत्वं वदेत् । वदन्ती कथं प्रमाणं भवेत् । तस्माद्येन तदानीमध्वर्युणा संज्ञपनं सर्वथा कर्तुमशक्यं तादृशं किंचिद्वक्तव्यम् । स च संज्ञप्तिहोमो भवितुमर्हति । तस्य विशिष्य तदानीमध्वर्युकर्तव्यत्वेन विहितत्वात्तदानीं तस्य करणे संज्ञपनस्य कर्तुमशक्यत्वात्संज्ञपनकार्यान्निवर्तनं युक्तमेव । संज्ञपनस्याप्यङ्गत्वात्, तस्य विना कारणं परित्यक्तुमशक्यत्वात्, तदीयेन प्रतिप्रस्थात्रा तत्क्रियते तस्मात्परावर्तनस्य पापप्रयोज्यत्वं न सिध्येदिति रिच्यत इव वा एष प्रेव रिच्यत इत्यनुवाकेन यत्प्रायश्चित्तमुपदिश्यते तत्तु याजनसामान्यप्रतिग्रहसामान्ययोर्न भवति । किंतु अयाज्ययाजननिषिद्धद्रव्यप्रतिग्रहयोः । तत्तु अस्मत्संप्रतिपन्नमेव । सायणाचार्यैरेवमेव तद्वाक्यं व्याख्यायि । तथाहि यः पुमान्स्वयमापद्रहितोऽपि द्रव्यलोभादयाज्यं याजयति निषिद्धं द्रव्यं वा परिगृह्णाति स पुमानिह लोके रिच्यत इव कीर्तिशून्य इव भवति । अहो दुरात्माऽयमेवं धनिकोऽपि मन्दद्रव्यलोभादन्यायं करोति, इति सर्वे जनास्तं निन्दन्ति । तदिदमिह लोके रिक्तत्वम् । तथा प्रेव रिच्यते परलोके प्रकर्षेण रिक्त इव भवति पुण्यलोकाभाव एव रिक्तत्वं याजनप्रतिग्रहयोर्जीविकारूपेण शास्त्रेऽभ्युपगतत्वान्निषिद्धयाजनप्रतिग्रहविषयमिदं द्रष्टव्यम् । अतो द्रव्यलोभाद्याजयित्वा प्रतिगृह्य वा भोजनरहितस्त्रिवारं स्वशाखारूपं वेदं जपेदिति । किंतु प्रायश्चित्तोपदेशमात्रेण पापमस्तीत्येव ज्ञायते न तु हिंसाप्रयुक्तपापमस्तीति । तथा सति प्रतिग्रहकर्मणि

हिंसासंबन्धाभावात्तत्र प्रायश्चित्तोपदेशोऽनुपपन्नः स्यात् । तस्मादयं प्रायश्चित्तोपदेशो यागीयहिंसायाः पापजनकत्वे साधको भवितुं नार्हतीत्यलम् । एतेन—एतेनोक्तप्रमाणान्यपशुचातुर्मास्यरतावकान्येवेत्यपास्तम् । सर्वकर्मस्वहिंसामिति विचिख्नुवाक्ये श्रवणाच्चेत्यपास्तम् । अपशुचातुर्मास्यस्य खरीविषाणायमानत्वात्, उन्मत्तेनापि तथा प्रलपितत्वेनानुक्तोपालम्भत्वात्सर्वकर्मस्वित्यादिवाक्यस्यान्यपरत्वेन व्याख्यातत्वात्तस्य प्रकृते हेतुत्वासंभवाच्चेति । यत्तु हिंसामयानां नित्यत्वोक्तिरपि मांसभक्षणादिरागान्धं वेदमार्गे प्रवर्तयितुं न तु तत्त्वदृष्ट्या । अत एव भागवते—

‘ मुन्यन्नैस्तु परा प्रीतिस्तथा न पशुहिंसया ’ ।

इत्युपक्रम्य—

‘ द्रव्ययज्ञैर्यक्ष्यमाणान्दृष्ट्वा भूतानि बिभ्यति ।
एष माऽकरुणो हन्यादतज्ज्ञोऽसुतृपो ध्रुवम् ॥
तस्माद्यथोपपन्नेन मुन्यन्नेनैव धर्मवित् ।
संतुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः ’ ॥

इति । द्रव्यमत्र पशुः । पशुयज्ञैरिति पाठान्तरं तेन मुन्यन्नेन तुष्टस्य तेनैव यज्ञोऽर्थात्तेनासंतुष्टस्य मांसादिलुब्धस्य तेनेति सूचितम् । तेषां तामसाधिकारिकत्वं च कपिलस्यूमरश्मिसंवादे मोक्षधर्मे स्पष्टमेव तत्तु बालप्रलापसमम् । वेदमार्गे प्रवर्तयितुं न तु तत्त्वदृष्ट्या वाक्यस्य वस्तुतो नित्यत्वाभाववतो नित्यत्वेन बोधनं मांसभक्षणाशाग्रस्तस्य वेदबोधितोपायेषु प्रवर्तनकप्रयोजनं न तु सर्वेषामवश्यानुष्ठेयत्वसिद्धिप्रयोजनकम्, इत्याशय उन्नीयते। नायं साधुराशयो भवितुमर्हति । तथाहि वेदबोधितोपायेषु इति पदस्यात्रत्यस्य वेदोक्तहिंसासहितज्योतिष्टोमादिकर्ममात्रपरत्वमेवाभ्युपगन्तव्यं न त्वितरोपायपरता । तत्र प्रवर्तनार्थं हिंसायुक्तानां नित्यत्वबोधनस्य भवद्भीत्येतरान्प्रति एतेषां नित्यत्वेन बोधनाभावेऽपि तेषु हिंसारहितोपायेषु तेषां प्रवृत्तेर्भवताऽप्यभ्युपगम्यमानत्वेनानुपयुक्तत्वात् । एवं च मांसभक्षणकामस्यैव नियमेनैतेषामनुष्ठानार्थं वस्तुतो नित्यत्वेन कथनं न तु सर्वान्प्रति नित्यत्वेन कथनमित्येव भवता वक्तव्यं न तु वस्तुतो नित्यत्वाभाववतो

नित्यत्वेन कथनं मांसभक्षणरागान्धप्रवर्तनार्थमित्येतादृशार्थे स्वरसतो बोधयन्मांसभक्षणादिरागान्धं वेदमार्गे प्रवर्तयितुं न तु तत्त्वदृष्ट्या, इति वाक्यं प्रयोक्तव्यम् । अस्य वाक्यस्यापि स एवार्थोऽभिप्रेत इतिचेद्भवतु यथाकथंचित् । तथाऽप्यसामञ्जस्यं न गच्छति । यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, इत्यत्र यथा सर्वान्कर्माधिकारयोग्यान्प्रति अग्निहोत्रदर्शपूर्णमासादीनामवश्यानुष्ठेयत्वं प्रतीयते तथैव वसन्ते वसन्ते ज्योतिषा यजेतेति वाक्येनाप्यविशेषप्रवृत्तेन सर्वान्प्रत्येव हिंसायुक्तज्योतिष्टोमादिकर्मणोऽवश्यानुष्ठेयता ज्ञायते । अत्र परं मांसभक्षणकामो वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिरीत्याऽधिकारिसंकोचे प्रमाणं नोपलभामहे । किं च यस्यैतेऽष्टाचत्वारिंशत्संस्कारा इत्यनेन पुरुषमात्रस्य त्रैवर्णिकस्याष्टचत्वारिंशत्संस्काराः कथितास्तत्र हिंसायुक्तज्योतिष्टोमादिकर्माण्यप्यन्तर्गतान्येवेति तेषामपि सर्वान्प्रति नित्यत्वमकामेनाप्यभ्युपगन्तव्यम् । भागवतवाक्यानि नहि निन्दान्यायेन प्रवृत्तानि न स्वार्थे प्रमाणानीत्यवगन्तव्यम् । यत्तु लोके व्यवायामिषमद्यसेवेति श्लोके भागवतेऽपि स्पष्टमेतत्, तच्चैवकारवादे निरूपितम् । तत्रैव स्थलान्तरे भगवद्वाक्यम्—

“ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ।
हिंसा विहाराद्यालब्धैः पशुभिः स्वसुखेच्छया ” ॥

यजन्ते देवता यज्ञैरिति । हिंसायां तत्फलमांसभक्षणे यदि रागस्तर्हि यज्ञ एवेत्यभ्यनुज्ञाद्वारा तादृशरागवतः प्रति परिसंख्येयं न तु सर्वान्प्रत्यावश्यकत्वेनेयं चोदनेत्यर्थः, नित्यत्वादिकमपि तान्प्रत्येवेत्यर्थकमुक्त्वा ‘ वेदस्य हृदयं लोके नान्यो मद्वेद कश्चन ’ मन्मत्तोऽन्यो न वेदेत्यर्थ इति तदपेशलम्, एतेषां पद्यानां ज्ञानप्रकरणे विद्यमानत्वाद् वैराग्यादिप्रशंसार्थं प्रवृत्तत्वाद्यथाश्रुतार्थो न विवक्षितः । अपि च रागिणः प्रति व्यवायामिषमद्यसेवानां परिसंख्येत्युक्तं तत्तु अस्माकं संमतमेव । अर्थी विद्वान्समर्थो यजेतेति न्यायेनार्थित्वस्याधिकारिविशेषणत्वात् । ये तु चित्तशुद्ध्या वैराग्यमापन्नास्तेषां कर्मसंन्यास एवाधिकारो न तु कर्मसु इत्येवास्माभिरभ्युपगम्यते । तस्मादेभिः पद्यै रागिणः प्रति परिसंख्यामात्रे यागीयाहिंसा दुष्टेति वक्तुं न शक्यते । यज्ञेऽभ्यनुज्ञाऽस्तीति वदता भवताऽपि यज्ञे पशुहिंसा न दुष्टेत्यवश्यमभ्यु-

पगन्तव्यम् । न च रागिण एवाभ्यनुज्ञा न त्वितरेषामिति वाच्यम् । रागिव्यतिरिक्तजनस्य कर्माधिकारस्यैवाभावादित्यलम् ।

अथ सांख्यं योगः पाञ्चरात्रं च विचार्यते ।

यत्तु अत एव पतञ्जलिना योगसूत्रे-एषां शुक्लकृष्णत्वेन व्यवहारः कृत इति तत्तुच्छम् । पूर्वमेव पातञ्जलं मतं वेदबाह्यमिति बहुधाऽऽवेदितत्वात् । यदपि गीतायामपि—

'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥'

इत्युक्तम् । कर्मण इति जात्यैकवचनम् । कस्यचित्कर्मण इष्टं सुखमेव फलं कस्यचिदनिष्टं दुःखमेव कस्यचिन्मिश्रमेतत्सर्वमत्यागिनां कर्मफलात्यागिनां प्रेत्य देहान्तरसंबन्धे भवति । न तु संन्यासिनां तत्फलत्यागिनाम् । न चात्यागिनां कर्मफलत्यागेऽपि कर्मानुष्ठायिनां सत्त्वशुद्धेः प्रागेव मृतानां तत्तत्कर्मफलं कर्मत्रैविध्यात्त्रिविधशरीरग्रहणरूपं भवति । पापस्यानिष्टं तिर्यगादिदेहरूपं पुण्यस्येष्टं देवादिदेहलक्षणं मिश्रस्य पापपुण्ययुगलस्येष्टानिष्टयुक्तं मनुष्यदेहलक्षणं संन्यासिनां मुख्यसंन्यासिनां तेषां ज्ञानतोऽज्ञाननिवृत्त्या देहसंबन्धाभावादिति वाच्यम् । तिर्यगादिदेहस्याप्युभयारब्धत्वात् । तत्रापि सुखदुःखोभयानुभवात् ।

'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' ॥

इत्युक्तश्लोकस्थत्यागस्यैवात्र त्यागपदेन ग्रहीतुमौचित्याच्च । उक्तत्यागफलकथनपरत्वात्पतञ्जल्येकवाक्यतया मदुक्तार्थस्यैवौचित्याच्च । संन्यासिपदेनापि उक्तश्लोकस्थत्यागिन एव ग्रहणमुचितं तस्य गृहीतदेहस्यापि जीवन्मुक्तदशयाऽवस्थानात्कर्मफलप्राप्तिजन्यहर्षविषादाभाव इति तात्पर्यादिति । तत्प्रकृतानुपयुक्तबहुप्रलापिनोऽस्थाने वृथा कलकलं कलयतो भ्रातृभावं भवतो व्यक्तंमावेदयति । नह्यत्र कर्मण इष्टानिष्टफलकत्वकथनमात्रेण यागीयहिंसाया दुष्टत्वं वक्तुं सुशकम् । नह्यस्मिञ्श्लोक एकस्मिन्नेव कर्मणि सुखदुःखोभयफलजनकत्वं प्रतीयते येन यागीयहिंसाया एव विहितत्वेन निषिद्धत्वेन चोभयफलकत्वमभ्युपगन्तव्यमित्युच्येत किंतु केवलपुण्यमात्रे कदाचित्फलदा-

नायोन्मुखं भवति । एकदा तु केवलपापमात्रं जातुचित्पापं पुण्यं चेत्युभयमपि युगपत्फलदानव्यग्रं भवति, इत्यर्थ एव तत्पद्यतः स्वरसतः प्रतीयते । किं चात्यागिनामिति पदं कर्मफलत्यागिपरमात्रोऽपि संन्यासिपरमित्ययं विचारोऽस्थाने कलकल एव । यदपि य इष्टापूर्तादिकर्मणा चन्द्रलोकं गतास्तत्र सुकृतभोगानन्तरवतारसमये व्रीह्यादावन्याधिष्ठितेऽनुशयिनः संसर्गभाज एव न तु तत्र भोगस्तेषां तत्र भोगप्रापककर्माभावादिति सिद्धान्तितोक्ते पशुहिंसादियोगादिष्टस्याशुद्धत्वात्तस्य तत्र भोगप्रापकत्वमस्त्विति पूर्वपक्षे यत्सिद्धान्तबोधकं व्याससूत्रमशुद्धमिति चेन्न शब्दादिति । तस्यायमर्थः— अशुद्धमेवेति चेन्न । शब्दात् । धर्मत्वाधर्मत्वयोः शब्दैकगम्यत्वात् । वैधहिंसाया धर्मत्वेनोक्तेर्न साऽधर्म एवेति अल्पपापत्वादेव वैधहिंसा न पूर्णदोषायेत्येव मीमांसकाशयः । अत एव तस्याल्पपापस्याल्पायुष्ट्वादिकं फलमुक्तम् । स्थावरभावो हि सर्वथाऽशुद्धस्यैव कर्मणः फलमिति व्यासाशयः । किं च यत्राल्पं सुखमधिकं दुःखं समे वा ते तत्रापि रागान्धान्तिकस्य परकीयसुन्दरीगमन इव तत्सुख उत्कटेच्छावशात्प्रवृत्तिरुपपद्यते दुःखस्याल्पत्वे तु सुतरामिति । तदपि भवान्समस्ततान्त्रिकासंमतार्थं कल्पयन् शब्दशक्तिस्वभावमजानतोऽव्युत्पन्नस्य भ्रान्तत्वं वेदयति । यदि, अशुद्धमिति चेन्नेति सूत्रस्य भवद्वर्णित एवार्थो व्याससंमतोऽभविष्यत्तर्हि सर्वज्ञभगवत्पादवाचस्पतिमिश्रप्रमुखा महान्तो व्याख्यातारस्तत्सूत्रं भवदुक्तरीत्यैवार्थापयिष्यन् । व्यासाभिमतस्तत्सूत्रार्थो मयैव ज्ञातो न तु तैरिति वदिता भवान्राजकीयकार्येऽभिप्रसक्तो महानिपुणो मन्त्री राज्यवस्तुस्थितिं न जानाति देशान्तरवासी गोपाल एव तज्जानातीति वदितुर्भ्रान्तेव । न च वाच्यं पतञ्जलिना सर्वज्ञेन ज्योतिष्टोमादिकर्मणो दुष्टत्वादुष्टत्वोभयसंवलितत्वेनाभ्युपगतत्वात्तदनुसारेणेदं सूत्रमित्थमेव व्याख्येयमिति । न हि पतञ्जल्यभ्युपगत एवार्थो व्यासेनाभ्युपगन्तव्य इति राजाज्ञाऽस्ति नापि पतञ्जलिरेव सर्वज्ञो न तु व्यास इत्युन्मत्तः कश्चिदभ्युपैति । किं च वेदवाक्यार्थविशदीकरणे जैमिनिबादरायणावेव कुशलावतस्तदभ्युपगतार्थ एव श्रेयस्कामैरभ्युपगन्तव्यो न त्वितराभिमतार्थ इत्येव शिष्टानां महात्मनां प्रवादः श्रूयते । पतञ्जलिस्तु शब्दसाधुत्वासाधुत्वव्यवस्थापन एव दक्ष इत्येव महर्षिभिरभ्युपगम्यते । अतः पतञ्जल्यभिमतो

वस्तुतो वेदविरुद्धार्थः श्रेयस्कामैर्नादरणीयः । न च व्यासेनैव योग-
सूत्रभाष्ये कर्मणामल्पदोषवत्त्वेन वर्णितत्वात्तदभिमत एवैतत्सूत्रार्थो
व्याससंमत इति वाच्यम् । सूत्राशयोद्घाटनार्थं सूत्रानुसारेणैव व्याख्या
करणीयेत्येव नियमस्तार्किकैरभ्युपगम्यते । अतो व्यासोऽपि पतञ्ज-
लिसूत्राशयोद्घाटनार्थं तथा भाष्यं कृतवान् । न च तावता स एवार्थो
व्याससंमत इति नियन्तुं शक्यते । श्रुत्यर्थनिर्णायकत्वेन ब्रह्मसूत्राण्य-
रचयत् । एवं चाशुद्धमिति सूत्रस्य स्वरसतो यादृशोऽर्थः प्रतीयते स
एव वेदार्थ इत्येव व्यासोऽभिमेनेत्येवाभ्युपगन्तव्यं सुधीभिः । नहि
कस्यचन सूत्रकारस्य स्वकृतसूत्रात्स्वरसतः प्रतीयमानोऽर्थो न संमतः
किंतु अन्यदीयसूत्रानुसारेण स्वकृताद्भाष्यात्स्वरसतः प्रतीयमानार्थ एव
संमत इति कश्चन विवेकी वदितुमर्हति । तस्मादशुद्धमिति सूत्रस्य मद्वर्णित
एवार्थो व्यासाभिमत इति यदुच्यते तत्तु न विचारसहम् । किं च परकीय-
सुन्दरीगमनदृष्टान्तप्रदर्शनेन कामेषु प्रवृत्त्युपपादनमसंगतम् । नहि शिष्ट-
त्वेनाभिमता जना ज्योतिष्टोमादिकर्मसु यथा सर्वजनसमक्षं प्रवर्तन्ते तथा
परकीयसुन्दरीगमने कदाऽपि प्रवर्तन्ते । किंच परकीयसुन्दरीगमनकर्तारो
यथाऽपाङ्क्तेयत्वेन गण्यन्ते नहि तथेमे गण्यन्ते । प्रत्युताऽऽस्तिकैः प्रथमं
पूज्यन्ते सकलवैदिकशिरोमणितया गण्यन्ते । अत एवानयोर्महद्वैषम्य-
मस्तीति प्राकृतैरपि ज्ञातुं शक्यत इति नात्रास्माभिरधिकं वक्तव्यम् ।

यत्तु अत एव मरणरूपफलानिष्टसाधनेऽपि सहगमनवेणीप्रवेशादावात्म-
हत्याङ्गके सर्वस्वारयागादौ च प्रवृत्त्युपपत्तिः पशुवधस्य प्रत्यवायेऽपि याग-
स्य साङ्गत्वसंपत्तये । यो नाम क्रतुसम्बन्धिमांसादीनि भक्षयेन्न
क्रतोस्तत्र वैगुण्यं यथाचोदिताकरणात् इत्युक्तमिति । तत्तु न विचारस-
हम् । सहगमने वेणीप्रवेशादिस्थले मरणस्यानिष्टत्वमेव नास्ति । जना-
नामिदमेवेष्टमिदमनिष्टमिति ब्रह्मणाऽपि नियन्तुं न शक्यते । पतिमर-
णानन्तरं जीवनेच्छारहितायाः पतिव्रताया मरणमेव कामयमानाया
मरणोपायत्वेन सहगमनात्मक उपायः शास्त्रेणाभ्यनुज्ञात एवमेव
वेणीप्रवेशादावप्यूह्यम् । तथा कयाचिदपि चिकित्सया निवर्तयितुमश-
क्येनातिदुःसहेन महारोगेण पीडितस्य जीवने निराशस्य मरणमेवाऽऽ-
काङ्क्षमाणस्य पुरुषस्य मरणोपायत्वेन सर्वस्वारात्मकः क्रतुर्विहितस्तत्र

च सहगमनसर्वस्वारादीनां विहितत्वादेव दुष्टत्वं नेत्यभ्युपगम्यतेऽस्माभिः । एवंचैतदादिस्थलेऽपि केवलेष्टसाधनत्वेनैव प्रवृत्त्युपपत्तिरिति प्रकारान्तरेण प्रवृत्त्युपपादनमुभयवादिसंमतं नेत्यलम् । पञ्चशिखाचार्यस्योभयवाद्यसंप्रतिपन्नत्वात्तत्संमतिरकिंचित्करी । यत्तु जैमिनेरेव सर्ववस्तुतत्त्वज्ञत्वाभावो मार्कण्डेयपुराणादवगम्यते सुतरां तदीयानाम् । तत्र हि व्यासशिष्यो जैमिनिर्भारतविषयेषु केषुचित्पदार्थेषु संदिहानो मार्कण्डेयं पप्रच्छ, स च न मेऽवसरस्तस्मात्सर्वज्ञान्विन्ध्याचलवासिनश्चतुरः पक्षिणः पृच्छेत्युक्तवान । तस्यायमाशयः—व्यासशिष्योऽप्ययमशुद्धचित्ततया व्यासोक्तं न साधु मन्यते । सर्वफलदं परमेश्वरं तत्त्वेन न मनुते किंतु कर्मैव फलदमिति । तथा देवतिर्यगादीनां व्यासोक्तं ज्ञानाधिकारं न मन्यते, असंभवादनधिकारं जैमिनिरिति व्यासोक्तेः । अतस्तिरश्चां शिष्यो भूत्वा तेषां ज्ञानाधिकारे ज्ञाते सर्वत्र व्यासोक्ते विश्वस्तो भवेत् । देवासुरसङ्ग्रामादेस्तन्मुखतः श्रवणे तेषामविग्रहत्वाभिमानं त्यक्ष्यतीति । तस्मात्पातञ्जलभाष्ये व्यासोक्तमेव श्रद्धेयमितीति । तच्च महतामुपालम्भेन स्वस्योन्मत्ततां मूर्खतां वा केवलमावेदयति । मार्कण्डेयपुराणस्थाया अस्या आख्यायिकाया एतादृशमाशयं भवन्तं विनाऽन्यः कश्चन पामरोऽपि नाभ्युपगच्छति । किं च नहि व्यासेन तिरश्चामधिकारः कुत्रापि प्रत्यपादि "तदुपर्यपि बादरायणः संभवात्" इत्यस्मिन्नधिकरणे विद्यायां देवानां परमधिकारः समर्थितस्तत्रापि तिरश्चामधिकारः परमर्षिणा नाभ्युपगम्यते । न च तथा सति पक्षिणां कथमुपदेष्टृत्वमिति वाच्यम् । येषां पक्षिशरीरावच्छिन्नानां ज्ञानवत्त्वं श्रूयते तेषामपि गर्भस्थवामदेवशूद्रभूतविदुरादिवज्ज्ञानजननयोग्यशरीरावच्छेदेनैव ज्ञानवत्त्वमुत्पन्नमित्यभ्युपगम्यते । ते च महान्तो योगैश्वर्यवशादनेकदेहादानन्यायेन नानाजातीयानि शरीराणि परिगृह्णन्ति । तस्मान्मार्कण्डेयेन केषांचन पक्षिविशेषाणामुपदेष्टृत्वकथनमात्रेण सर्वेषां पक्षिणां ज्ञानवत्त्वं वा ज्ञानाधिकारवत्त्वं वाऽभ्युपगन्तुं न युज्यते । नहि अगस्त्येन समुद्रः पीत इति सर्वैर्विप्रैः समुद्रः पातुं शक्यत इत्युन्मत्तोऽप्यभ्युपगच्छति । अतो मार्कण्डेयवचनस्यैतादृशाशयवर्णनं त्वयैवानुमोदनीयं नान्येन केनचित् । किंच जैमिनेः कर्मैव फलदमीश्वरो नास्ति

देवतानामपि विग्रहवत्त्वं नास्तीत्यादिषु विषयेषु नास्त्याग्रहः*। किंतु कर्मविश्वासरहितानां नास्तिकानां बौद्धादीनां खण्डनार्थं तथा कथितवान्। एतच्छंकरविजये भगवद्विद्यारण्यस्वामिकृते नवमसर्गे स्पष्टमित्यास्तां तावत्। यत्तु—

' यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् '॥

इत्यनेनापि सूचितमेतत्। आद्यपादेनैहिकस्त्यन्तकालदुःखसदृशसुखसमानदुःखनिरासः। न च ग्रस्तमित्यनेन तदधिकदुःखनिरासः। अनन्तरमित्यनेन निद्राकालवद्वैषयिकोभयरहितदिनरूपकालनिरासः। अन्यथा सकलदुःखाभावस्याऽऽद्यपादेनैव प्रतिपादने सिद्धे न च ग्रस्तमित्यस्य वैयर्थ्यापत्तेः। अभिलाषोपनीतत्वेन विषयसंपादनक्लेशनिरासः। स्वर्गेऽपि वैषयिकमेव सुखमिति अप्सरस एनं जाया भूत्वोपशेरत इत्यग्निष्टोमादिफलकथनेनैकः पूर्वपरयोरिति सूत्रे भाष्ये स्पष्टमुक्तम्। एवं च विजातीयसुखत्वमेव स्वर्गत्वम्। तस्मान्महिषासुरादिजन्यदुःखमस्त्येवेति सूचितम्। यद्वा स्वनान्तरीयकावश्यभाविदुःखान्यदुःखजनकाधर्मानारब्धदेहोपभोग्यसुखत्वं तत्। सहगमनादौ मरणा-

* भगवता जैमिनिना नवमे देवताधिकरणे—"देवता वा प्रयोजयेत्" इति पूर्वपक्षमुपक्षिप्य " अपि वा शब्दपूर्वत्वात् " इत्यनेन सिद्धान्तितं तदाशय एवम्—" वज्रहस्तः पुरंदरः " इत्यादिभूतार्थवादानां प्रमाणान्तराविरोधे प्रतीयमानार्थेऽपि प्रामाण्यं विद्यत इति। किंप्रयुक्ता धर्मा इत्येव तत्रोहलक्षणे विचारः प्रस्तुतो न देवताविग्रहादिनिर्णयः। अत एवापूर्वस्वीकारमात्रेणैव शब्दमात्रप्रमाणको भगवाञ्जैमिनिः परितुष्टो न भगवती देवता द्वेष्टि। तावतैव स्वापेक्षितोहाध्यायस्याऽऽरम्भसिद्धेः। भगवतो जैमिनेश्च देवताविग्रहादिकं संमतमित्यधिकारलक्षणे तद्व्याख्यातृभिः प्रपञ्चितमिति तत एवावगन्तव्यम्। विस्तरभिया नेह तन्यते। प्रासङ्गिकाः केचन व्यासजैमिनितन्त्रभेदा ये संदृश्यन्ते तेऽविकारिभेदेनोह्याः। आहुश्चात्र भट्टपादाः श्लोकवार्तिके—

" इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन॥ " इति।

न्तप्रायश्चित्तादौ चोक्तरीत्याऽल्पं पापं भूयान्धर्मो ज्योतिष्टोमन्यायेन वदन्तीति दिगिति । तत्तुच्छम् । यन्न दुःखेन संभिन्नमित्यादिपद्येन स्वरसतः प्रतीयमानोऽर्थ इत्थम्—न दुःखेन संभिन्नं स्वावच्छेदकशरीरावच्छेदेन स्वसमवायिसमवेतत्वसंबन्धेन दुःखवद्भिन्नम् । न च ग्रस्तमनन्तरमित्यस्य शरीरप्राप्त्यनन्तरं सुखाभावावच्छेदकशरीरावच्छिन्नाभिन्नम् । अभिलाषोपनीतमित्यस्य संकल्पमात्रेणोत्पन्नं न तु प्रयासेन । एतादृशविशेषणत्रयविशिष्टसुखमेव स्वपदबोध्यं भवितुमर्हति, इति भवदुक्तरीत्या हिंसाजन्यदुःखसंबन्ध उक्तविशेषणानुपपत्तेः । भवदुक्तरीत्या विशेषणानामङ्गीकारेऽपि तथा तद्वाक्यार्थवर्णनं हिंसाजन्यदुःखसंबन्धान्यथानुपपत्त्यैव न तु स्वरसतस्तद्वाक्यात्तादृशार्थः प्रतीयत इति वाक्यस्वारस्यं भज्येत । केचित्तु यन्न दुःखेनेत्यादि न स्वर्गलक्षणं विशेषणचतुष्टयव्यावर्त्याभावात् । किंतु स्वरूपकथनमात्रम् । विशेषणचतुष्टयेनापि हि सांसारिकसुखवैलक्षण्यमस्य ब्रुवता सुखत्वावान्तरजातिः स्वर्गत्वमुपलक्ष्यते । तद्धि दुःखमिश्रमिदं तु न तथा । एवं सांसारिकं राज्यादिसुखं वर्षाद्यवधिप्रमाणाभावाच्छत्रुकृतापहारादिशङ्काग्रस्तम् । इदं तु अर्थवादादिप्रमाणतो वर्षादियावत्कालभोग्यतया प्रमितं न तन्मध्येऽपहारादिशङ्काग्रस्तं तथेदमन्तरमनवच्छिन्नं संततं वर्षादिपर्यन्तमितरत्तु न तथा किंतु सुखदुःखोभयरहितावस्थयाऽवच्छिन्नमेवमिदमभिलाषमात्रेणोपनतमुपस्थितं न स्रक्चन्दनवनितादिविषयापेक्षमितरत्तु विषयापेक्षमेवेत्येवंरीत्याऽस्य पद्यस्यार्थं वर्णयन्ति । अस्मिन्पक्षेऽपि स्वर्गसुखस्य दुःखसंबन्धगन्धोऽपि नास्तीत्येव प्रतीयत इत्यलम् ।

यदपि श्येनवधप्रयुक्तमत्यल्पं पापं भवत्येवेति तत्तु मीमांसेतिशब्दस्याप्यश्रोतृत्वमात्मनः प्रख्यापयति । यतस्तद्व्यपदेशं चेत्येतस्मिन्नधिकरणे श्येनेनाभिचरन्यजेतेति वाक्यमुदाहृत्यात्रत्यश्येनपदं श्येनपक्ष्यात्मकगुणविधायकमाहोस्वित्कर्मनामधेयं वेति संदिह्य तत्प्रख्यन्यायात्मकबाधकाभावात्, श्येनपदस्य श्येनपक्षिण्येव प्रसिद्धत्वात्, ‘ यथा वै श्येनो निपत्याऽऽदत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते ’ इत्यर्थवादस्योपक्रमस्थविधिवाक्यानुसारेण ते तद्विलासा इव तद्विलासा इतिवन्नेयत्वात्, प्रकृतसोमयागमाश्रित्य फलोद्देशेन श्येनात्मकगुणविधायकमाहोस्विच्छ्येनविशिष्टकर्मान्तरविधायकं वेति पूर्वपक्षे प्राप्ते, अर्थवादस्यानन्वयालंकारत्वे सर्वेषामर्थवादस्थपदानामुपमानान्तराभावल-

क्षकत्वापत्तेरुपक्रमन्यायात्प्रबलेन भूयोनुग्रहन्यायेनोपक्रमस्थ एकस्मि- ञ्छ्येनपदे रूपकविधया लुप्तोपमानविधया वा गौणीं वृत्तिमाश्रित्य श्येनपदस्य द्वितीयविधिप्रकारापादकं नामधेयत्वमेवाङ्गीकर्तव्यम् । अर्थवादस्तु रूपकाद्यपेक्षितमादृश्योपपादनार्थः सन्निनैव लक्षणां पूर्णो- पमानविधया विधेययागस्तुत्यर्थं इत्येवाभ्युपगम्यते. इति सिद्धान्ति- तम् । भवदुक्तरीत्या श्येनपक्षिद्रव्यकः श्येनयाग इत्यभ्युपगम्यते चेदे- तदधिकरणसिद्धान्तविरोधः स्यात्, इत्यलमधिकेन प्रपञ्चेन । तस्मा- च्छ्रेयस्कामैर्वेदार्थतत्त्ववित्सर्वज्ञव्यासजैमिनितदनुयायिमहानुभावशंकरश- बरस्वाम्यादिमतमनादृत्य वेदविरुद्धार्थप्रलापिसांख्यानुयायिना येनकेन- चित्पण्डितंमन्येन व्याकरणमतबोधकमञ्जूषादौ प्रलपितं स्वप्नेऽपि न विश्वसनीयम् । किंतु व्यासजैमिनिमतमेवाऽऽदरणीयमित्यास्ताम् ।

श्रीरामो जनकः सती मतिमती यस्य प्रसूर्जानकी
दत्तात्रेय इति प्रक्लृप्तनिगमो यः सोमयाजी सुधीः ।
गोविन्दः सुगुणश्च विष्णुरपरो ह्येवं त्रयः सोदराः
श्रीलक्ष्मीकमलेशपादयुगुले ग्रन्थं न्यधाद्रामनः ॥ १ ॥



| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता ।... ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि ।... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः ।... ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— ,, ,, | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् ।... ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता । धर्मशास्त्रग्रन्थः । | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् ।... | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्रम् । ... ... ... ... | २ | ० |
| १०७ लीलावती—श्रीमद्भास्कराचार्यप्रणीता । टीकाद्वयोपेता द्विभागा । | ३ | ० |
| १०८ व्याकरणमहाभाष्यम्—प्रदीपोद्द्योतयुतं (अङ्ग०)प्र. भा. । | २ | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... ... | १ | |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्कः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ५ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ५७ | आचारभूषणम् | ४ | ६ |
| ५८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| १०५ | आश्वलायनगृह्यसूत्रम् | २ | १२ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शां०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |

| ग्रन्थाङ्कः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवा० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| १०४ | त्रिंशच्छ्लोकी | १ | १५ |
| ४३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| १०६ | दशोपनिषदः | २ | ० |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टु रा०स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ५६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ४ |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | | ० |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| १०० | प्रायश्चित्तेन्दुशेखरः | १ | १० |
| १५ | बृहदारण्यकोपनिषत् | ८ | ० |
| ६४ | ,, (रामानुजटी०) | ३ | ४ |
| ३१ | ,, ( मिताक्षरा ) | २ | १२ |
| १६ | बृहदारण्यको०भा०वा० | २२ | ८ |
| ७१ | बृहद्योगतरङ्गिणी | १० | १२ |
| ६८ | बृहद्ब्रह्मसंहिता | १ | १२ |
| २८ | ब्रह्मपुराणम् | १ | ४ |
| १०२ | ब्रह्मवैवर्तपुराणम् | ५ | ४ |
| २१ | ब्रह्मसूत्राणि (शां०) | १२ | ० |
| ६७ | ,, ब्रह्मामृतवर्षिणी-दीपिकासमेतानि | ४ | ८ |
| ८२ | ब्रह्मसूत्रवृत्तिः | २ | ६ |
| ३४ | भगवद्गीता (शां०भा०) | २ | ० |
| ३४ | ,, ( सटीकशां०भा० ) | ६ | ४ |
| ४४ | ,, ( पैशाचभाष्य० ) | १ | ८ |
| ४५ | ,, (मधुसूदनीश्रीधरीटी० | ५ | ४ |
| ९२ | ,, ( रामानुजीया ) | ७ | ८ |
| ९९ | भास्करीयबीजगणि.सटी. | २ | ० |
| ७५ | भाष्यार्थरत्नमाला | ४ | ४ |
| ५४ | मत्स्यपुराणम् | ६ | ० |
| १० | माण्डूक्योपनिषत् | २ | [illegible] |
| ९७ | मीमांसादर्शनम् | २५ | ९ |
| ९ | मुण्डकोपनिषत् | ० | १० |
| ६० | यतिधर्मसंग्रहः | १ | १२ |
| ५० | यतीन्द्रमतदीपिका | १ | ४ |
| ४६ | याज्ञवल्क्यस्मृतिः | १३ | ० |
| ५ | योगरत्नाकरः | ५ | ० |
| १९ | रसरत्नसमुच्चयः | ३ | १२ |
| २ | रुद्राध्यायः | १ | ६ |
| १०७ | लीलावती | ३ | ० |
| ८० | वाक्यवृत्तिः | ० | ८ |
| ८९ | वायुपुराणम् | ४ | १२ |
| ८६ | विधानमाला | ४ | ४ |
| २७ | वृन्दमाधवः | ६ | १२ |
| [illegible] | वेदान्तसूत्रमुक्तावलिः | २ | ६ |
| ४३ | वैयाकरणसिद्धान्तकारिकाः | ० | १२ |
| २३ | वैयासिकन्यायमालाविस्तरः | १ | १२ |
| १०१ | शांकरपादभूषणम् | ८ | ५ |
| ६५ | शांखायनब्राह्मणम् | १ | ४ |
| ९० | [illegible] | ० | ९ |
| | [illegible] | १ | ५ |
| [illegible] | [illegible] | २ | ० |
| २२ | श्रीमच्छंकरदिग्विजयः | ६ | ० |
| १०३ | श्रुतिसारसमुद्धरणम् | ० | १३ |
| १७ | श्वेताश्वतरोपनिषत् | २ | ४ |
| ९४ | संस्कारपद्धतिः | २ | ८ |
| ८३ | संक्षेपशारीरकम् | ९ | १ |
| ३५ | संगीतरत्नाकरः | १० | ४ |
| [illegible] | सत्याषाढविरचितश्रौतसूत्रम् | २८ | ५ |
| ५१ | सर्वदर्शनसंग्रहः | २ | ० |
| ४० | सन्ध्याभाष्यसमुच्चयः | २ | ० |
| २९ | [illegible]रत्नमाला | १२ | ८ |
| | सिद्धान्तदर्शनम् | १ | ४ |
| २५ | सूतसंहिता | ११ | ८ |
| १८ | सौरपुराणम् | ३ | ० |
| ४८ | स्मृतीनां समुच्चयः | ५ | ० |
| ७० | स्मृत्यर्थसारः | १ | १० |
| ९६ | हस्त्यायुर्वेदः | ७ | ६ |